**अतसीकुसुमश्यामः पीताम्बरनिवसनः प्रसन्नमुखः।**
**कुण्डलकिरीटधारी पीनगलोरःस्थलांसभुजः॥**

**खड्गगदाशरपाणिर्दक्षिणतः शान्तिदश्चतुर्थकरः।**
**वामकरेषु च...........................भूतिमिच्छद्भिः॥[37]**

भगवतः विष्णोः प्रतिमायां क्वचित् अष्टौ भुजाः कदाचित् चत्वारः भुजाः क्वचिच्च द्वौ एव भुजौ रचितौ दृश्येते। विष्णुप्रतिमायाम् उरसि श्रीवत्सस्य चिह्नम् अङ्कनीयम्। रोमावर्तेन अङ्कितं श्रीवत्सचिह्नम् अतिरिच्य कौस्तुभमणेरपि रचना उरस्येव कार्या। विष्णुप्रतिमायाः वर्णः अतसीपुष्पवत् श्यामो भवेत्। भगवतः परिधानं पीतवर्णीयं स्यात्। प्रतिमा स्मितानना विधेया। कर्णयोः कुण्डलस्य तथा शिरसि मुकुटस्य निर्माणम् अपि करणीयम्। विष्णुप्रतिमायां कण्ठ-उरस्-स्कन्ध-बाहूनां रचना अतिमांसला करणीया।

अष्टभुजेषु ये दक्षिणपार्श्वे चत्वारः पाणयस्सन्ति तेषु एकैकस्मिन् क्रमशः 'नन्दक' संज्ञकः खड्गः, 'कौमोदकी' नामकगदा, शरः रचनीय एवं चतुर्थः द्रष्टुरभिमुखः शान्तिदायकः करः अर्च्यः। वामकरेषु क्रमशः 'शाङ्र्ग' धनुः, खेटकम्, 'सुदर्शन' चक्रं तथा 'पाञ्चजन्य' शङ्खः रचनीयः।

यदि चतुर्भुजविष्णुप्रतिमां कर्तुं वाञ्छति तर्हि दक्षिणपार्श्वे एकः भुजः शान्तिदः द्वितीयश्च गदाधरः निर्मेयः। वामपार्श्वे एकस्मिन् शङ्खः एवं द्वितीये चक्रं रचनीयम्। अथ च यदि द्विभुजात्मिका विष्णुप्रतिमा कर्तव्या तर्हि दक्षिणहस्तः शान्तिदः एवं वामहस्तः गदाधरः रचनीयः।

### कानिचन विष्णुमन्दिराणि

भारतीयमन्दिरस्थापत्येतिहासे दशमशताब्द्यां चन्देलराजवंशेन निर्मितानि 'खजुराहो' नगरस्य मन्दिराणि अतिप्रथितानि सन्ति। वस्तुतः चन्देलवंशीयेषु केचन राजानः वैष्णवमतावलम्बिन आसन्। अतः वैष्णवमन्दिराणि कालेऽस्मिन् रचितानि आसन्। एतेषु मन्दिरेषु प्रायः चतुर्भुजस्य विष्णोः प्रतिमा रचिता दृश्यते।

नवमशताब्द्यारुत्तरार्धे काश्मीरे अवन्तिवर्मणः शासनमासीत्। तेन निर्मितं विष्णुमन्दिरं भारतीयस्थापत्येतिहासे मन्दिरवास्तोः उत्कृष्टतममन्दिरेषु अन्यतमं वर्तते। अवन्तिस्वामिमन्दिरेषु शिल्पकला अत्युत्कृष्टा वर्तते।

इत्थम्, यथा भारतीयसंस्कृतौ भगवतः विष्णोः विशिष्टं स्थानं वर्तते तथैव भारतीयस्थापत्येतिहासेऽपि भगवद्विष्णुप्रतिमायाः तन्मन्दिराणाम् अतिमहत्त्वपूर्णं स्थानं विद्यते।

---

37. तत्रैव, श्लोक सं 31-35

# हिमाचले शैवपरम्परायाः विकासः

**डॉ. देशबन्धुः**
**जगदीशकुमारः**

भारतीयानां जीवने हिमालयपर्वतस्य प्रभावः सर्वाधिको दृश्यते। पर्वतोऽयं न केवलं पाषाणमृत्तिकादिरूपं परञ्च देशस्यास्य संस्कृतेर्धर्मस्य च विशिष्टाधारः। अत्रत्येषु प्राकृतिकस्थलेषु, हिमाच्छादितशृङ्खलासु च मानवः 'सत्यं शिवं सुन्दरम्' इत्यस्य दर्शनं प्रत्यक्षरूपेण अनुभवति। अत्रत्या देवभूमिः, हरितवर्णीयानि प्राकृतिकवनानि, निरन्तरं-कलकलध्वनिं कुर्वन्त्यो नद्यः, विभिन्नतडागानि, गगनं स्पृशन्ति शैलानि, असंख्यप्रासादाः पूजनस्थलानि च अचिरमेव समेषां मनांसि हरन्ति। पर्वतस्यास्य महिमां विज्ञाय महाकविकालिदासेन असौ 'देवतात्मा' इति संज्ञात्वेनाभिहितः। तद्यथा –

**अस्त्युत्तरस्यां दिशिदेवतात्मा हिमालयो नाम नगाधिराजः।**
**पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः॥**[1]

'हिमाचलशब्दोऽयं' **हिम+अचल** इति द्वयोः शब्दयोर्मेलनेन निष्पद्येते। हिमस्यार्थोऽस्ति-शीतलत्वम्, अचलस्यार्थोऽस्तिस्थिरत्वम्। अर्थात्- हिमेनाच्छादिताः अचलाः पर्वता यत्र दृश्यते तत्र हिमाचलमस्ति। **'हि' (गतौ वृद्धौ च) इति धातोः 'मक्' प्रत्ययकृते सति 'हिम' इति शब्दो निष्पन्नो भवति।**[2] अस्यार्थो भवति गमनं-प्रेरणादायकञ्च। **यः मनुष्याणां कृते सुमार्गे गमनस्य प्रेरणां प्रददाति** तथा च 'अचलं' इति स्थिरत्वं, शैलत्वं दर्शयति। **हिमाचलप्रदेशस्य क्षेत्रफलं 55,673 वर्ग किलोमीटरपरिमितमिति। अस्य क्षेत्रं समुद्रतलात् 350 मीटर इत्यतः 7,000 मीटरपर्यन्तमुन्नतमस्ति।**[3] पश्चिमहिमालयशृङ्खलायां प्रदेशोऽयं सुशोभते। प्रदेशस्यास्य नवतिप्रतिशतं जनाः ग्रामेषु निवसन्ति, अवशिष्टाश्च जना जीविकोपार्जनाय महानगरेषु वसन्ति।

विश्वेऽस्मिन् यत्किमपि ज्ञान-विज्ञानञ्च समस्तशास्त्रेषु वर्तते तत्सर्वं वेदेषु प्रतिष्ठितम्। भारतीयसंस्कृतेराध्यात्मिकपक्षे पुरुषार्थचतुष्टयस्य विशिष्टयोगदानं विद्यते। तत्र पुरुषार्थचतुष्टये प्रथमपुरुषार्थो धर्मोऽस्ति। धर्म एव जीवनस्याधारभूततत्त्वमस्ति। वेद एव धर्मस्य विशिष्टोन्नायकोऽखिलाधारभूत इति

---

1. कुमारसम्भवम् प्रथमे सर्गे- श्लोक- 01
2. अष्टाध्यायी सहजबोध (प्रथमो भागः-सार्वधातुप्रकरणे- धातुसं.-1257) सम्पादनम् -डा. पुष्पा दीक्षित तृतीयसंस्करणं-2011, प्रतिभाप्रकाशनम् दिल्ली-11007,
3. अलौकिक हिमाचल प्रदेश, भौगोलिक परिचय, पृ.- 04, लेखकः- जगमोहन बलोखरा, H-G Publications New Delhi -110062 प्रथमप्रकाशनम्- 2015,

प्रतिपादयता मनुना उक्तञ्च – **'वेदोऽखिलो धर्ममूलम्।'**[4]

वेदाश्चत्वारः– ऋग्यजुस्सामाथर्वाख्याः। तत्र वेदचतुष्टये विश्वस्य प्राचीनतमो ग्रन्थ ऋग्वेदोऽस्ति।[5] चतुर्णां वेदानां चत्वार उपवेदाः–आयुर्वेद- धनुर्वेद - गान्धर्ववेद- स्थापत्यवेदाश्च। भारतीयसंस्कृतेः शास्त्रपरम्परायाश्च वैशिष्ट्यमिदं वर्तते यदत्रेकैकमपि शास्त्रं, एकैकाऽपि कला च अध्यात्मना सह सम्बद्धास्ति। आध्यात्मिकभावनां विना मानवजीवने सफलता न प्राप्तुं शक्यते। मानवस्य जीवनस्य परमोद्देश्यं किं कथञ्च तदवाप्तुं शक्यते ? प्रश्नस्यास्य पूर्णरूपेण समाधानं साधनयाऽनया ज्ञातुं शक्यते। साधनामिमां कृत्वा मानवेन ज्ञायते यत्तस्य जीवनं केवलं भोगार्थमेव नास्त्यपित्वात्मोन्नतेः कृतेऽपि प्रमुखं साधनमस्ति। इदं रहस्यं विज्ञाय मानवो दैवत्वं प्राप्तुं समर्थो भवति। यस्य पदस्याकाङ्क्षा देवानां कृते दुर्लभोऽस्ति साधनयाऽनया तत्पदमवाप्तुं शक्यते। अस्या शक्तेर्बलादेव इदं ज्ञायते यत् समग्रमपि प्राणिजातं ईश्वरेण निर्मितम्। स मानवः सर्वेषु प्राणीष्वैकत्वं पश्यति। सर्वप्राणिषु शोकमोहादिरहितो भवति। स्थितिमिमां परिकल्प्य शुक्लयजुर्वेदस्यैकस्मिन् मन्त्रे उद्धरणं दृश्यते यत्–

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः।।**[6]

सर्वे भारतीयदार्शनिकाः, स्मृतिकाराः, वैय्याकरणाः,साहित्यिकाः,शास्त्रज्ञाश्च वेदानां परमप्रामाण्यं स्वीकुर्वन्ति। तेषां दृष्टौ वेदाध्ययनमेव परमं तपः। महर्षिपतञ्जलिर्ब्राह्मणान् प्रति विशेषतया निर्दिशति यत् तैर्वेदाङ्गानामध्ययनं, परिपालनञ्च अकारणमेव करणीयम्। तद्यथा –

**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।**[7]

वेदेषु प्रतिपादितोऽऽचारव्यवहारोऽयं हिमाचलप्रदेशीयजनेषु अधुनाऽपि द्रष्टुं शक्यते। तत्रत्यैर्जनैः ईश्वरतत्त्वस्य साधना विभिन्नदेवानामुपासनारूपे प्राचीनकालादेव अधुनापर्यन्तं क्रियते। तत्रत्य निवासिनां प्रमुखदेवः कल्याणमयः शिवः। विभिन्नधार्मिकविश्वासाः साधनाश्च संस्कृतिरक्षणाय अस्माकं सहयोगं कुर्वन्ति। प्रदेशस्यास्य साधनापद्धतिमवगन्तुमेतस्य वैदिको लौकिकश्चेतिहासः अवश्यमेव द्रष्टव्यः। कूर्मपुराणानुसारं अस्य दीर्घत्वं 1080 योजनानि सन्ति। तद्यथा –

---

4. मनुस्मृतिः, अध्याय-02, श्लोक- 06, कुल्लूकभट्टविरचित मन्वर्थमुक्तावली संस्कृत टीका एवं हिन्दी भाषानुवादः प्रथमो भागः, सम्पादक- अनुवादकः- डा. राकेश शास्त्री, विद्यानिधिप्रकाशनम् दिल्ली, प्रथमसंसकरणम्- 2005,
5. www-unesco-org /New/en/communication religious-texts and information memory of the world.
6. शुक्लयजुर्वेद अध्याय- 40, मन्त्र-07, वाजस्नेयी- माध्यन्दिन शुक्लयजुर्वेदीयसंहिता, सम्पादकः- पं. जगदीश शास्त्री, प्रकाशनम्- मोतीलाल बनारसीदास दिल्ली, प्रथमसंस्करणम्- 1971,

**पर्वतो हिमवान्नाम नानाधातुविभूषितः।**
**योजनानां सहस्राणि साशीतिस्त्वायतो गिरिः।।**[8]

भूमिरियं देवभूमिः इत्यनेन विशेषणेन प्रसिद्धा वर्तते। अत्रत्य प्रकृतिर्देशस्य कृतेऽद्वितीयोपहारः। देवभूमिः हिमाचलस्योल्लेखः संस्कृतवाङ्मये अनेकत्र प्राप्यते। अस्य बहूनि पर्यायपदानि सन्ति –

तद्यथा – हिमाद्रि–हिमवान्–हिमवन्त–हिमगिरि–देवभूमि–तुहिनाचल–हिमाचलमित्यादीनि। अस्य पर्वतस्य विषये वेदेष्वपि क्वचिदेकवचने, क्वचिच्च बहुवचने प्रयोगः प्राप्यते। सर्वादौ ऋग्वेदे 'हिमवत्' शब्दः बहुवचने प्रयुक्तः। तद्यथा –

**यस्येमे हिमवन्तो महित्त्वा, यस्य समुद्रं रसया सहाहुः।**
**यस्येमा प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम।।**[9]

अर्थाद् इमे हिमाच्छादिताः पर्वता यस्मादुत्पन्नाः सन्ति। अयं समुद्र- जलवायु- पृथ्वीराकाशादि- प्रमुखदिशोपदिशश्च भुजां प्रसार्य यस्मिन्नद्वितीयपरमेश्वरे तिष्ठन्ति तं वयमुपास्महे।

अथर्ववेदेऽपि हिमालयस्य सन्दर्भे 'हिमवत्' शब्दस्य बहुवचने प्रयोगः प्राप्यते–

**यस्य विश्वे हिमवन्तो महित्वा समुद्रे यस्य रसामिदाहुः।**
**इमाश्च प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम।।**[10]

महीधर- उव्वटादिप्रभृतयः वेदानां भाष्यकाराः 'हिमवत्' शब्दस्यार्थः 'हिमाचलपर्वत' इत्यामनन्ति। स्वीयभाष्ये ते निर्दिशन्ति यत्–

**इमे हिमवन्तो हिमाचलप्रभृतयः पर्वताः।।**[11]

वेदानन्तरं लोककल्याणदृष्टिमाश्रित्य वेदव्यासरचितेषु पुराणेष्वपि हिमाचलस्य सन्दर्भो द्रष्टुं शक्यते। सुमेरुपर्वतस्य दक्षिणभागे स्थितानां वर्षपर्वतानां नामानि क्रमशः प्रदीयन्ते–सुमेरुपर्वतस्य

---

7. महाभाष्य आह्निकः - प्रथमः
8. कूर्ममहापुराणम्- 2 / अध्याय-37/श्लोक सं0-46, सम्पादको व्याख्याकारश्च कन्हैयालाल जोशी, प्रकाशनम्- पग्मिल पब्लिकेशन्स दिल्ली, प्रथमसंस्करणम्,
9. ऋग्वेदसंहिता, मण्डल - 10, अनुवाक - 10, सूक्त- 121, मन्त्रसं.- 04, सम्पादकः- डा. धर्मेद्रकुमारः, सहसम्पादकः- प्रद्युम्नचन्द्रः, प्रकाशनम्- दिल्ली संस्कृत अकादमी नवदेहली, प्रथमसंस्करणम्- 2013,
10. अथर्ववेदसंहिता -- (शौनकशाखायां) काण्ड-04 / सूक्त-02 / मन्त्रसं.-05, सम्पादकः- डा. धर्मेद्रकुमारः, सहसम्पादकः- प्रद्युम्नचन्द्रः, प्रकाशनम्- दिल्ली संस्कृत अकादमी नवदेहली, प्रथमसंस्करणम्- 2013,
11. वाजसनेयीसंहितायां- (उव्वट- महीधरभाष्ये) 25/12

दक्षिणभागे निषधपर्वतः विराजते यस्मिन् हरिवर्षं, निषधपर्वतस्य दक्षिणतः हेमकूटपर्वतः यस्मिन् किम्पुरुषवर्षं, हेमकूटपर्वतस्य च दक्षिणभागे अयं हिमालयपर्वतः यस्मिन् भारतवर्षं विराजन्ते। यथोक्तं श्रीमद्भागवतपुराणे–

**एवं दक्षिणेनेलावृत्तं निषधो, हेमकूटो हिमालयः इति प्रगायता यथा नीलादयोऽयुतयोजनोत्सेधो हरिवर्षं किम्पुरुषवर्ष भारतानां यथासंख्यम्॥**[12]

अथर्वसंहितायाः पृथ्वीसूक्ते भूमिप्रार्थनायां निर्दिष्टं यत्–

**गिरयस्ते पर्वताः हिमवन्तोऽरण्यं ते पृथिवीस्योनमस्तु।**[13]

इति प्रतिपादयता अथर्वकृषिणा 'गिरयः' इति पदस्य सामान्यपर्वताः तथा च 'हिमवन्तः' इति पदस्य हिमाच्छादिता हिमाचलादयः पर्वता इत्यर्थाः स्वीकृताः। सम्भवत इदं प्रतीयते यत् ते भारतभूमेर्विशिष्टस्य पर्वतराजहिमालयस्य चर्चा कुर्वन्ति स्म। वेदाङ्गेषु व्याकरणं मुखं वर्तते तत्रापि 'हिमवत्' शब्दोऽयं दृश्यते, पाणिनीयाष्टाध्याय्यां **'वेशन्तहिमवद्भ्यामण्'**[14] इति सूत्रं वर्तते।

श्रीमद्भगवद्गीतायाः विभूतियोगनामके दशमेऽध्याये भगवता श्रीकृष्णेन पर्वतेषु अहं हिमालयनामकपर्वत इत्युक्त्वा पर्वतस्यास्य दिव्यत्वं प्रदर्शितम्। ते उद्घोषयन्ति श्रीमद्भगवद्गीतायाम्–

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम्।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः॥**[15]

सर्वेषु सम्प्रदायेषु साधनायाः पक्षद्वयं वर्तते– आन्तरिकसाधना, बाह्यसाधना च।

**आन्तरिकसाधना -**

साधनायाः प्रथमपक्षे जीवः शिवस्य चिन्तनं मननञ्च करोति। भारतवर्षे शिवपूजनस्य विशिष्टं महत्त्वं वर्तते। सनातनसंस्कृतौ ईश्वरस्य तिस्रोऽवस्थाः स्वीकृताः। यथा सत्त्वगुणमयो विष्णुः, रजोगुणमयो ब्रह्मा, तमोगुणमयो शिवः। भगवान् शिव एव सृष्टेः संहर्त्ता मन्यते। यदा पृथिव्यां पापाचारः, व्यभिचारोऽन्धकाररूपिणोऽधर्मस्य च साम्राज्यं भवति तदा भगवान् शिवः तमोगुणरूपेण पापाचारिसाम्राज्यं विनाश्य पुनर्धर्मं स्थापयति। स परमशिवः शैवागमानां परमाराध्यदेवोऽस्ति। वेदेषु पुराणेषु चायमेव रुद्रः, पशुपतिः, त्र्यम्बकः, उमापतिः, भूपतिः, नीलकण्ठः महादेवश्चेत्यादिभिर्नामभिर्ज्ञायते। शिवस्यानेकनामानि सन्ति तेषु 'देवाधिदेवो महादेवः' प्रसिद्धः। कृष्णयजुर्वेदे श्वेताश्वतरोपनिषदि प्रधानदेवः शिव एव वर्तते। शुक्लयजुर्वेदे षोडशतमेऽध्याये शिवस्य स्तवनं प्राप्यते। तद्यथा–

---

12. श्रीमद्भागवतपुराणं - 05/16/09
13. अथर्वसंहिता - 12/01/11
14. पाणिनीय अष्टाध्यायी- अध्याय-04/ पाद-04 /सूत्र सं.-112
15. श्रीमद्भगवद्गीता - अध्याय- 10, श्लोक- 25

**नमोऽस्तुनीलग्रीवाय सहस्राक्षाय मीढुषे।**
**अथोयेऽअस्यसत्त्वानो हन्तेभ्यो करन्नमः।।[16]**

शिवसाधनया जीवस्य सर्वतः कल्याणं भवति। मनुष्यः शिवकृपया जन्ममरणरूपबन्धनाभ्यां निश्चयेन मुक्तिं लभते। ये जनाः 'शिव' इति अक्षरद्वयात्मकं नामोच्चारणं स्वजीवने सदैव कुर्वन्ति ते स्वर्ग मोक्षञ्च प्राप्नुवन्तीति नात्र संशयः। विषयेऽस्मिन् स्कन्दपुराणे महर्षिलोमशः प्रतिपादयति -

**शिवेति द्व्यक्षरं नाम व्यवहरिष्यन्ति ये जनाः।**
**तेषां स्वर्गश्च मोक्षश्च भविष्यति न चान्यथा।।[17]**

**बाह्यसाधना -**

साधनायाः द्वितीयपक्षे बाह्यसाधना वर्तते यस्या बोधकग्रन्था आगमाः सन्ति। आगमस्य अपरं प्रसिद्धं नाम - तन्त्रम्। वाचस्पतिमिश्रवर्येण योगभाष्यस्य तत्त्ववैशारदीटीकायां 'आगम' इति शब्दस्य व्युत्पत्तिर्कृता-

**आगच्छन्ति बुद्धिमारोहन्ति यस्मादभ्युदयनिःश्रेयसोपायाः सः आगमः।।[18]**

अर्थात् यया साधनया कल्याणकारकाः सिद्धिदायकश्चोपाया बुद्धौ स्फुरन्ति तत्तत्त्वम् 'आगम' इति। शास्त्रेऽस्मिन् व्यावहारिकपक्षस्य प्रामुख्यं वर्तते।

**तन्त्राणां मुख्यतया त्रयो भागाः सन्ति-**

1. ब्राह्मणतन्त्रम् 2. बौद्धतन्त्रम् 3. जैनतन्त्रम्

ब्राह्मण-तन्त्राणामुपास्यदेवता मुख्यरूपेण त्रिधा सन्ति-

1. वैष्णवागमः - उपास्यदेवता - विष्णुः
2. शैवागमः - उपास्यदेवता - शिवः
3. शाक्तागमः - उपास्यदेवता - शक्तिः

एतेषु क्रमशः विष्णुः, शिवः शक्तिरित्येतेषां देवानामुपासना क्रियते। वैष्णवागमः पाञ्चरात्रागमनाम्ना विज्ञायते। रामानुजानुसारमागमोऽयं विशिष्टाद्वैतस्य प्रतिपादनं करोति। शैवागमे द्वैत-अद्वैत-द्वैताद्वैतानां

---

16. शुक्लयजुर्वेद - अध्याय- 16, मन्त्र- 08
17. स्कन्दपुराणम् माहेश्वर केदारखण्डं- 01/16
18. संस्कृत वाङ्मय का बृहद् इतिहास (एकादश तन्त्रागमखण्डे भूमिकायां पृष्ठ-14) प्रधानसम्पादक:- पद्मभूषणाचार्य बलदेव उपाध्याय, सम्पादकः- प्रो. ब्रजवल्लभ द्विवेदी, प्रकाशनम्- उत्तरप्रदेश संस्कृत संस्थान लखनऊ, प्रथमसंस्करणम्- विक्रमी सम्वत्- 2053, सन् 1997,

मतत्रयाणामुपलब्धिर्वर्तते। शाक्तागमस्तु केवलमद्वैततत्त्वस्य प्रतिपादनं करोति।

**शैवागमाः –**

**नित्यज्ञानाश्रयं वन्दे निःश्रेयसनिधिं शिवम्।**
**येनैव जातं सृष्ट्यादि तेनैवेदं सकर्त्तृकम्।।**[19]

विद्वज्जना आगमशास्त्राणि वेदवदपौरुषेयानि, स्वतः प्रमाणानि च स्वीकुर्वन्ति। शैवमतानुयायिनामनुसारं शैवागमानामुपास्यो देवता भगवान् शिवोऽस्ति। भगवतः शिवस्य पञ्चमुखैः (ईशान्-तत्पुरुष-अघोर-वामदेव-सद्योजातैः) उत्पन्नज्ञानस्य विस्तारोऽनादिकालादधुनापर्यन्तं हिमाचलप्रदेशे द्रष्टुं शक्यते। महादेवशिवः पार्वतीं प्रति आगमानामुपदेशं कुर्वन् कथयति – हे प्रिये ! कलियुगे आगमं विना मनुष्याणां गतिर्न भवितुं शक्नोति। तद्यथा–

**सत्यं सत्यं पुनः सत्यं सत्यं सत्यं मयोच्यते।**
**विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये।।**[20]

शैवागमानां सामान्यतश्चत्वारः पादाः सन्ति- ज्ञान-योग-क्रिया-चर्याश्च। क्रियापादे मन्दिरनिर्माणविधिः, मूर्तिरचनायाश्च विवरणं प्राप्यते। 'मोहनजोदडो' इति स्थानात् प्राप्तावशेषे मुद्रायां ध्याननिरतदेवस्य आकृतिः सम्भवतः पशुपतिनाथशिवस्य प्रतीयते। यतोहि शिवः सर्वदा ध्याने एव समाधिवस्थायां तिष्ठति। तत्रैव शिवलिङ्गानि शिवचरणामृतकुण्डं भित्तेरावृत्तनगराणि चैत्यादीनि प्राप्तानि। येषां निर्माणं शैवागमे वर्णितानां पद्धतिनामाधारेण वर्तते। महाभारते अनुशासनपर्वण्युपमन्युः श्रीकृष्णं प्रति आगमानां रहस्यं वर्णयामास।[21] शैवागमे पदार्थत्रयाः सन्ति–

1. पतिः – ईश्वरः (सर्वज्ञः सर्वपालकः शिवः)
2. पशुः – जीवः (अल्पज्ञो जीवात्मा)
3. पाशः– बन्धनम् (माया)

**पतिः**– शैवसम्प्रदाये पतिपदार्थः शिवस्य बोधं कारयति। उक्तञ्च–

**तत्र पतिपदार्थः शिवोऽभिमतः।।**[22]

---

19. सर्वदर्शनसंग्रहः – शैवदर्शने मङ्गलाचरणम्
20. महानिर्वाणतन्त्रे (द्वितीयोल्लासे श्लोकसं.-07), श्रीमन्महेश्वरभगवत्प्रणीतम्, (पं. बलदेव प्रसादमिश्रविरचितभाषा टीकयासमलंकृतम्) खेमराज श्रीकृष्णदास प्रकाशनम् – बम्बई, संस्करणम्-विक्रमी सम्वत् – 2052, सन् – 1995,
21. महाभारत अनुशासनपर्वे – 14/67/377
22. सर्वदर्शनसंग्रहः, पृष्ठ– 277

स शिव एव सर्वज्ञः, सर्वव्यापकः, सर्वकर्त्ता, सर्वपालकः, नित्यः, ज्ञानात्मक-क्रियात्मक-शक्तिभ्यां युक्तः, स्वतन्त्रः पतिरित्युच्यते। शिवस्य पञ्चमुखैः अष्टाविंशति (28) आगमानामाविर्भाव जातः। शक्तिरूपे ईशानादि-पञ्चमन्त्रैः परमेश्वरस्य मस्तकादीनां कल्पनाः क्रियन्ते –

1. मस्तकम् – 'ईशान्.' महानारायणोपनिषदः 21 तममन्त्रेण निर्मितम्।
2. मुखम् – 'तत्पुरुषाय.' " " " 20 तममन्त्रेण निर्मितम्।
3. हृदयम् – 'अघोरेभ्यो.' " " " 19 तममन्त्रेण निर्मितम्।
4. गुह्यस्थानम् – 'वामदेवाय.' " " 18 मन्त्रेण निर्मितम्।
5. पादः – 'सद्योजातं.' " " " 17 मन्त्रेण निर्मितम्।

उक्तञ्च मृगेन्द्रागमे –

**तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः।**
**ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम्।।[23]**

अस्य पञ्चमुखशिवस्य कृत्यान्यपि पञ्चविधानि सन्ति – सृष्टिः, स्थितिः, संहारः, तिरोभावः, अनुग्रहश्चेति। भोजराज्ञा प्रपञ्चितमिदम्–

**पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहारतिरोभावः।**
**तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य।।[24]**

**पशुपदार्थः–** शैवागमे द्वितीयः पदार्थोऽस्ति पशुः। सः पशुः मलयुक्तः, अज्ञानावृतः, अजडः, अल्पज्ञः, स्वार्जितस्य पापपुण्यफलभोक्ता, भोगमोक्षभोक्ता पुरुषः 'जीवात्मा' इत्युच्यते। यथोक्तम्–

**देहान्योऽनश्वरो व्यापी विभिन्नः समलो जडः।**
**स्वकर्मफलभुक्कर्ता किञ्चिज्ज्ञः सेश्वरः पशुः।।[25]**

**पशुः त्रिविधोऽस्ति –**

विज्ञानाकलः – मलयुक्तः, प्रलयाकलः – मलकर्मयुक्तः, सकलाकलः – मलकर्ममायायुक्तः

---

23. श्रीमृगेन्द्रतन्त्रे विद्या पादे – तृतीय पटले / श्लोक सं.–8, श्रीनारायणकण्ठकृतटीकोपेतम्, सम्पादकः– पं0 मधुसूदन कौल शास्त्री, प्रकाशनम्– मेहरचन्द लछमनदास नई दिल्ली– 110002, संस्करणम्– 1982,
24. सर्वदर्शनसंग्रहः, पृष्ठ– 283
25. Satratna-Sangraha /Sutra- 19/ Writer & Sri Umapati Sivacharya, University of Madras First publications- 1973.

**पाशपदार्थः** - शैवागमे येन साधनेन पतिः शिवः सर्वान् प्राणिनो निबध्नाति तत्साधनं पाशः (माया) इति। पाशश्चतुर्विधो विभज्यते - 'मल-कर्म-माया-रोधशक्तयः।

**मललक्षणम्** - एकत्वे सति योऽनेकशक्तिभिर्युक्तः पुरुषस्य ज्ञान-क्रिययोरावरणं करोति, स मलपाश इत्युच्यते।

**एको ह्यनेकशक्तिर्दृक्क्रिययोश्छादको मलःपुंसः।**[26]

**कर्मलक्षणम्** - प्रत्येकं मानवो फलभावनया यत्किमपि करोति तत्कर्मनाम्ना विज्ञायते। धर्माधर्मौ कर्मान्तर्गतमेवायातः। कर्माणि अनादीनि सन्ति।

**मायालक्षणम्** - प्रलयकाले यस्यां शक्तौ समस्तचराचरजगतमिदं विलीयते तथा च सृष्टिकाले पुनरुत्पद्यते सा शक्तिर्माया इति नाम्ना प्रसिद्धा वर्तते।

**रोधशक्तिः** - चतुर्थपाशान्तर्गता इयं शक्तिः 'शिवशक्तिपाशे' अधिष्ठात्री वर्तते। सा पुरुषस्य स्वरूपं आच्छादयति। एषा सर्वश्रेष्ठात्मिका शक्तिरस्ति।

**काश्मीरशैवदर्शनम्**

काश्मीरीय-शैवदर्शनानुसारं परमशिवः उपनिषदां परब्रह्मैव एकमात्रं परमं सत्यमस्ति। सः परमशिवः पूर्णतया चैतन्यत्वेन सर्वशक्तिमान् वर्तते। अस्य परमतत्त्वस्यागमः शैवागमनाम्ना विज्ञायते। शैवागमाधारेण विकसितमद्वैतदर्शनमेव काश्मीरीय-शैवदर्शनमस्ति। अयमेव प्रत्यभिज्ञादर्शनं स्वातन्त्र्यवादः शिवाद्वयदर्शनम् ईश्वराद्वयवाद इत्यादिभिरनेकनामभिः प्रसिद्धोऽस्ति। काश्मीरादपरस्थानेषु इदमेव 'काश्मीरशैवदर्शनम्' (Kashmir Shaiva Darshan) इत्युच्यते।[27] इदमेव 'त्रिकमतम्' इति नाम्नापि सम्बोध्यते। अस्य कारणमस्ति शिवशासने 'सिद्धातन्त्रं, नामकतन्त्रं, मालिनीतन्त्रम्' एतेषां तन्त्राणां प्रधानता वर्तते। तद्यथा-

**'तच्च (त्रिकशास्त्रम्) सिद्धनामकमालिन्याख्यखण्डत्रयात्मकत्वात्त्रिविधम्।**[28]

**शैवागमानामितिहासः**

शैवाचार्याः शैवागमानामुद्भवम् अनादिकालान्मन्यन्ते। ते तथ्यमिदं अङ्गीकुर्वन्ति यत् शैवागमानाम् उद्भवस्य काचित् तिथिर्नास्ति यतोहि एत आगमाः कालक्रमे भूयो भूयः स्वयं भगवान् शिवस्य पञ्चमुखैरुत्पद्यन्ते। **शैवाचार्यसोमानन्दानुसारं त्र्यम्बकादित्यपरम्परायां षोडशः शिष्यः संगमादित्यो भ्रमणं कुर्वन् काश्मीरराज्ये गतः तत्रैव च निवसितः।**[29] अनेन प्रकारेण तस्य पुत्रपौत्रादिकैः

---

26. सर्वदर्शनसंग्रहः - पृष्ठ- 295
27. Kashmir - Shaivism page no- 01, Writer- J Rudrappa, (M.A) (L.L.B)
28. तन्त्रालोक भाग- 01, पृष्ठ- 49
29. शिवदृष्टिः, आह्निक - 07/114- 119

शिष्यपरम्परया शास्त्रस्यास्य विकासः प्रचारः प्रसारश्च काश्मीरदेशे कृतः। सोमानन्दः स्पष्टरूपेण लिखति यत् स त्र्यम्बकादित्यस्य विंशतितमः वंशजोऽस्ति। तस्य पञ्चदशतमः पूर्वजो ब्राह्मणकन्यया सह विवाहमकरोत्। तस्मादुत्पन्नः षोडशतमः पुरुषः संगमादित्यः काश्मीरे वासमकरोत्। ततः परं वर्षादित्य-अरुणादित्य-आनन्दानां क्रमे विंशतितमो वंशपरम्परायाम् आचार्यः सोमानन्द उत्पन्नः। अतो विद्वज्जना: काश्मीरशैवदर्शनस्यारम्भं सोमानन्दस्य समकक्षे (800 ई0 पू0) एव स्वीकुर्वन्ति। सोमानन्दस्य पञ्चदशतमो वंशजोऽभिनवगुप्तः स्वरचिते 'तन्त्रालोक'-नामकग्रन्थे सिद्धतन्त्रस्यानुकरणं कृत्वा अद्वैत-द्वैताद्वैत-द्वैतादीनामागमानां प्रचारकाः त्र्यम्बक-श्रीनाथ-आमर्दका इति सङ्केतितवान्। एतैर्विद्वज्जनैः श्रीकण्ठनाथस्य आज्ञानुसारेण कलियुगस्य प्रारम्भिकचरणे लुप्तशैवागमानां प्रचारः प्रसारश्च कृतः। एतस्याः शैवपरम्पराया निर्वहणस्य दिग्दर्शनं **परमानन्दकृतशैवभूषणे अष्टादशाचार्याणां**[30] नामोल्लेखेन प्राप्यते। तद्यथा-

| | | |
|---|---|---|
| 1. उग्रज्योतिः | 7. श्रीकण्ठः | 13. वैराग्यशिवः |
| 2. सद्योज्योतिः | 8. नीलकण्ठः | 14. ज्ञानशम्भुः |
| 3. रामकण्ठः | 9. सोमशम्भुः | 15. त्रिलोचनशिवः |
| 4. विद्याकण्ठः | 10. ईशानशम्भुः | 16. वरुणशिवः |
| 5. नारायणकण्ठः | 11. हृदयशम्भुः | 17. ईशानशिवः |
| 6. विभूतिकण्ठः | 12. ब्रह्मशिवः | 18. अघोरशिवः |

एते सर्वे शैवाचार्या नवमीशताब्दीतो दशमीशताब्दीपर्यन्तमुपस्थिता आसन्। यैः शैवागमस्य परम्परायाः प्रसारः जातः। सम्पूर्णेऽपि भारतवर्षे काश्मीरात् कन्याकुमारीपर्यन्तं भव्यमन्दिराणां निर्माणमारब्धम्। भारतस्योत्तरभागे शैवमन्दिराणां दक्षिणभागे च वैष्णवमन्दिराणां बाहुल्यं जातम्। भारतस्य पर्वतीयक्षेत्रेषु शिवपूजनस्य, शक्तिपूजनस्य च परम्परा आरब्धा। सैव परम्परा अद्यावधिः हिमाचले दृश्यते। हिमाचलप्रदेशे वैष्णवसम्प्रदायः प्राचीनकालादेव तावान् लोकप्रियो न अभवद्यावान् शैवः शाक्तधर्मश्च। शैवशाक्तधर्मौ प्रागैतिहासिककालादेव अस्य प्रदेशस्य लोकधर्मौ आस्ताम्। जनपदीयशासनकाले ताभ्यामधिका शक्तिर्गृहीता। शकाः कुषाणास्तु शैवा एव आसन्। काश्मीरनरेशहूणो मिहिरकुलस्य थानेश्वरस्य च सम्राजः हर्षवर्धनस्य पूर्वजाश्चापि शैवा आसन्। स्पितेः सेनवंशो कुल्लूजनपदस्य, भरमौरस्य वर्मनशासकः, औदुम्बरत्रिगर्तकुलिन्दानां राजगणाः सर्वेऽपि शैवा आसन्। औदुम्बराणां मुद्रासु वृषभत्रिशूलयोः तथा च कुठारस्य रूपमङ्कितान्यासन्। तेषां जीवनचरित्रस्य निदर्शनेन ज्ञायते यत् तेऽपि शिवभक्ता आसन्। वृषभः भगवतः शिवस्य वाहनरूपः तथा च अन्यं प्रतीकद्वयं तस्य शस्त्राणि सन्ति। एतस्माद् शैवधर्मस्य प्रसारः लोकप्रियता च दरीदृश्यते। प्राचीनराजकीयमुद्रासु शिवस्य विभिन्नानि नामानि

---

30 संस्कृत वाङ्मय का बृहद् इतिहास (एकादश- तन्त्रागमखण्डे- पृष्ठ सं.-159) प्रधानसम्पादकः- पद्मभूषणाचार्य बलदेव उपाध्याय, सम्पादकः- प्रो. ब्रजवल्लभ द्विवेदी, प्रकाशनम्- उत्तरप्रदेश संस्कृत संस्थान लखनऊ, प्रथमसंस्करणम्- विक्रमी सम्वत्- 2053, सन् 1997,

उट्टङ्कितानि सन्ति। यथा-- रुद्रदासः, शिवदासः, पशुपतिरिति। एतानि सर्वाणि नामानि महादेवशिवं प्रति सङ्केतयन्ति। अनेन सिद्ध्यते यद् एतेषामुपर्युक्तानां नृपाणां प्रधानदेवः शिवः एव आसीत्। धार्मिकमान्यताः एव कस्यापि देशस्य प्रदेशस्य च अभिन्नाङ्गत्वेन भवन्ति। याभिः तस्य संस्कृतेर्विषये ज्ञायते। यो योगक्षेमविधायकः, प्रेरणास्पदो भवति मनुष्यत्वस्य कृते सुरक्षासम्पादकः, प्राप्तव्येश्वरस्य प्राप्तिसाधनञ्च भवति स एव धर्मः। उक्तञ्च महाभारते -

**धारणाद्धर्म इत्याहुर्धर्मो धारयते प्रजाः।**
**यत्स्याद्धारणसंयुक्तः स धर्म इति निश्चयः॥**[31]

धर्मस्य काचित् सीमिता परिभाषा नास्ति। परञ्च एतत्तु वक्तुं शक्यते यद्धर्मस्य आध्यात्मिकपक्षः मानवोद्धारमूलकः तथा कर्मकाण्डपक्षः संस्कृतेः रक्षणाय भवति। प्राचीनकालादेव हिमाचलप्रदेशे याः अनेकाः परम्पराः दुर्गमस्थानेषु च गुहाः, प्राकृतिकलिङ्गानि, मूर्त्तयः, शिवस्यानेकमुद्राः, असंख्यप्रासादाः प्रमाणरूपाः सन्ति ताः अधुनाऽपि तत्रत्यानां निवासिनां मूलधार्मिकताविषये प्रकटसाक्ष्यभूताः सन्ति। तत्र शिवस्यानेकमन्दिराणि सन्ति तेषु प्रसिद्धानि निम्नलिखितानि सन्ति-

| | | |
|---|---|---|
| **कांगडाजनपदस्थ प्रसिद्धमन्दिरे** | - | 1. वैजनाथमहादेवः, 2. महाकालमहादेवः |
| **ऊनाजनपदस्थ मन्दिरे** | - | 1. शिवबाडीमहादेवः, 2. सदाशिवमहादेवः |
| **हमीरपुरजनपदस्थ मन्दिरम्** | - | 1. बाबा बालकनाथः |
| **मण्डीजनपदस्थ मन्दिराणि** | - | 1. भूतनाथमहादेवः, 2. मगरूमहादेवः, 3. तेवनीमहादेवः 4. ममलेश्वरमहादेवः |
| **कुल्लुजनपदस्थ मन्दिराणि** | - | 1. बिजलिमहादेवः, 2. जगेश्वरमहादेवः, 3. मणिकर्णमहादेवः 4. शमश्रीमहादेवः |
| **शिमलाजनपदस्थ मन्दिराणि** | - | 1. कुमारसैनमहादेवः, 2. महासुमहादेवः, 3. ईश्वरमहादेवः |
| **सिरमौरजनपदे मन्दिरम्** | - | 1. चूडधारमहादेवः |
| **स्पीतिजनपदे मन्दिरम्** | - | 1. त्रिलोकीनाथमहादेवः |
| **सोलनजनपदस्थ मन्दिरम्** | - | 1. जतोलीमहादेवः |

# भारतीयवास्तुशास्त्रे विश्वकर्मणः योगदानम्

**डॉ. प्रवेशव्यासः**
**किशनकुमारशर्मा**

सर्वप्रथमं इदं विचारणीयं यद् वास्तुशास्त्रस्य जन्म कदा अभवत्। वयं सर्वे समीचीनरूपेण जानीमः यत् षड्वेदाङ्गेभ्य एव भारतीयवास्तुविद्यायाः जन्म अभवत्। धर्म एव भारतीयवास्तुकलायाः आश्रय आसीत्। अत एव पूजानां यज्ञानां धार्मिकसंस्काराणां च सम्बन्धे भूमिचयनम् आवश्यकम् अस्ति। भूसंस्कारादीनाम् आवश्यकाङ्गानाम् उल्लेखः निर्देशश्च च एषु ग्रन्थेषु प्राप्यते। त एव समयानन्तरं वास्तुविद्यायाः सूत्रापातरूपेण सहायकाः अभवन्।

वास्तुविद्यायाः उत्पत्ति वैदिककालादेव समभवत्। इदं शास्त्रं शुक्राचार्यमतानुसारेण विद्यास्थानपदमपि अलंकृतवान्। वैदिकवाङ्मय-पुराण-महाकाव्य-बृहत्संहिता-मानसारादीनां शिल्पशास्त्रीयग्रन्थानां तथा च अन्येषां प्राचीनग्रन्थानां सम्यगध्ययेन वास्तुविद्यायाः अनेकेषां प्रवर्तकानां नामोल्लेखः एवं च तेषां सिद्धान्तानामुल्लेखः प्राप्यते। अत एवेदं निर्विवादं वक्तुं शक्यते यदस्याः विद्यायाः मूलाचार्याणां जन्म, पुराकाले अस्मिन् देश एव समभवत्। अस्माकं भारतीयपरम्परानुसारं प्रत्येकं विद्यायाः पृथग्-पृथग् जन्मदाता अस्ति। अतो वास्तुविद्याचार्येषु प्रवर्तकेषु वा द्वे नामनी प्रसिद्धे स्तः। प्रथमो विश्वकर्मा द्वितीयश्च मयः। विश्वकर्मणः कल्पना देवानां स्थपतिरूपेण आदिकालादेव भारतदेशे प्रचलिता अस्ति। प्राचीनग्रन्थेषु एतादृशाः संकेताः प्राप्यन्ते यद् विश्वकर्मणः अवतारः भारतदेशस्य उत्तरभूभागे समभवत्। विश्वकर्मा विभिन्नशास्त्रीयग्रन्थेषु वास्तुविद्यायाः प्रथमप्रवर्तककत्वेन आचार्यः मन्यते। अतः इदं सुस्पष्टं यद् विश्वकर्मा देवानां स्थपतिरासीत्।

मत्स्यपुराणे[1] बृहत्संहितायां च येषां पञ्चविशति-आचार्याणां निर्देशः प्राप्यते तेषु विश्वकर्मापि प्रमुखोऽस्ति यथा-

| | | |
|---|---|---|
| 1. भृगुः | 2. अत्रिः | 3. वसिष्ठः |
| 4. विश्वकर्मा | 5. मयः | 6. नारदः |
| 7 मनुः | 8. नग्नजित् | 9. विशालाक्षः |

1. भारतीयस्थापत्यम्, पृ. 27

| | | |
|---|---|---|
| 10. पुरन्दरः | 11. ब्रह्मा | 12. कुमारः |
| 13. शम्भुः (नन्दीश) | 14. शौनकः | 15. गर्गः |
| 16. वासुदेवः | 17. अनिरूद्धः | 18. शुक्रः |
| 19. बृहस्पतिः | 20. पराशरः | 21. काश्यपः |
| 22. भारद्वाजः | 23. अगस्त्यः | 24. प्रह्लादः |
| 25. मार्कण्डेयः | | |

वास्तुपरम्परायाः प्रथमः आचार्यः विश्वकर्मा इमां विद्यां ब्रह्मणः प्राप्तवान्। ऋग्वेदस्य द्वयोः सूक्तयोः विश्वकर्मणः बृहद्विवेचनम् अभवत्।[2] अनयोः सूक्तयोः ऋषिः देवताश्च क्रमशः विश्वकर्माभौवन विश्वकर्मा च स्तः। यजुर्वेदेऽपि विश्वकर्मणः उल्लेखः प्राप्यते[3]। मानसारे अपि कथितं यत्, सः विश्वकर्मा ब्रह्माण्डस्य रचना वारं-वारं करोति[4]। विश्वोऽयं यस्य कर्म सैव विश्वकर्मा। सः संसार-रूपीमहावृक्षस्य तक्षणं कृत्वा द्यावा-पृथिव्योः निर्माणम् अकरोत्।[5] वाल्मीकिरामायणे[6] विश्वकर्मणा निर्मितलङ्कापुर्याः स्थिति- विस्तार-सौन्दर्यायदिविषयोपरि विस्तृतं विवरणम् उपलभ्यते। डॉ. डी. एन. शुक्लः समराङ्गणसूत्राधारापराजितपृच्छाग्रन्थयो आधारेण कथयति यत् विश्वकर्मा, प्रभासवसोः पुत्रः आसीत्[7] तस्यानुसारं विश्वकर्मा सूक्ष्मकला-स्थापत्यकलाशिल्पकला-चित्रकलानां निर्माणसौन्दर्यपक्षस्य च विशेषज्ञः आसीत्। अयं प्रसिद्धयान्त्रिकोऽपि आसीत्। यः बहूनां विमानयानानां निर्माणम् अकरोत्।[8] वेदेषु विश्वकर्मणः चर्चा त्वष्ट्रा सह समुपलभ्यते[9]-

**अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे।**

**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे।।**[10]

विश्वकर्मा, सृजनस्यैव संज्ञा। सृजनशक्तेः नामेव देवः। वस्तुतो विश्वस्य रचनायाः तथा तस्य व्यवस्थायाः यस्य तत्वस्य योगदानमस्ति, स एव विश्वकर्मा अस्ति। विश्वकर्मा देवलोकस्य व्यवस्थापकः अस्ति। सः अग्निमाध्ययेन सम्पूर्णविश्वे ऊर्जायाः संचारं करोति। अग्निमाध्ययेन सः देवलोकपृथिवीलोकयोर्मध्ये समन्वयं स्थापयति।[11]

---

2. ऋग्वेदः, 10.81.82
3. ''सा विश्वायुः सा विश्वकर्मा सा विश्वद्यायाः'' यजुर्वेद, 17.24, 1732
4. 'स एवायं विश्वकर्मा ब्रह्माण्डं सृजते मुहुः। मानसार, अ.-2.2.
5. भारतीय कला, पृ.-53
6. वा. रामायण, युद्धकाण्ड, 24/1-12
7. समराङ्गणसूत्राधार, वास्तुशास्त्र (भवन-निवेश), पृ.-4
8. हिन्दु सांइस ऑफ आर्किटेक्चर, पृ.-59
9. वाजसनेयी संहिता, 92/6!
10. वाजसनेयीसंहिता, 31/7
11. यजुर्वेदः, 1865, 18/43, 13/16

सम्पूर्णभारतीयार्थव्यवस्थायाम् अयम् एकः प्रबलदैवशक्तिरूपेण मन्यते। कृषि-शिल्प-व्यवसाय-वाणिज्य-उद्योगेषु च अस्य दैवशक्तिः प्रगतिमार्गं प्रशस्तं करोति।

आर्थिकव्यवस्थायां येषाम् उपकरणानाम् आवश्यकताभूत्, तेषां निर्माता विश्वकर्मा तथा तस्य पुत्रपरम्परा आसीत्। यथार्थतः भारतीयवास्तुपरम्परायाः विभिन्नाङ्गानां यथा भवन-दुर्ग-प्रासाद-मन्दिर-स्तूप-चैत्यादीनां निर्माणस्योल्लेखः महाकाव्येषु पौराणिकसाहित्येषु, बौद्धसाहित्येषु च प्राप्यते।

वास्तुशास्त्रीयग्रन्थेषु वर्णनमस्ति यद् वास्तुकला विश्वकर्मणा तथा च तस्य मानसपुत्रैः विकसिता। रामायणमहाभारतपुराण-बौद्धसाहित्यादिषु विश्वकर्मणा निर्मितायाः वास्तुकलायाः बहवः दृष्टान्ताः प्राप्यन्ते। तेन तस्य अद्भुतशिल्पकर्मणः ज्ञानं भवति। तेषु प्रमुखरूपेण इन्द्रस्य प्रासादः,[12] शिवार्थम् आवासः,[13] कुबेराय भवनम्,[14] यमस्य सभावनम्,[15] महर्षि अगस्त्यस्य भवनम्,[16] इन्द्रप्रस्थः,[17] द्वारकापुरी,[18] लंकापुरी,[19] दुर्गः,[20] सरोवराः,[21] तोरणादीनि[22] प्रसिद्धानि सन्ति।

---

12. ब्रह्मवैवर्तपुराण
13. वामनपुराण, 54,1
14. महाभारत, सभापर्व-10/1-40
15. म.भा., स. प.-8/34
16. वा. रा., किष्किन्धा काण्ड, 41/34
17. स्कन्दपुराणम्, तृतीयखण्ड-1/21/47
18. विष्णुपुराण, 5/23/13-14
19. महाभारत, वनपर्व-279/12
20. शाक्त उपपुराण, अ.-72
21. महाभारत, वनपर्व-312/44
22. वामनपुराण, अध्याय-94/2

# विद्यालयभवननिर्माणविचारः

डॉ. जोगेश्वरमहान्तः

संसारे सर्वे जनाः सुखमिच्छन्ति। कोऽपि नेच्छति यत् मम जीवने दुःखमागच्छत्विति। स्थातुं भवनानि आवश्यकानि, तद्वत् पठितुमपि विद्यालयभवनानि आवश्यकानि। अतः भवनानां निर्माणात् प्राग् इदं ध्यातव्यं यत् कथमेतेषां निर्माणं करणीयमिति। यथा वास्तुविशेषज्ञाः विचारयन्ति यत् कुत्र द्वाराणि स्युः, कुत्र वातायनानि स्युः, एवमेव कूप-तडागवृक्षादीनां स्थितिः कथं स्यादिति।

**भवननिर्माणे विचारयोग्यतथ्यानि**

यस्मिन् भवने, देवालये, मठे वा सूर्यकिरणाः नागच्छन्ति, वायुप्रवाहोऽपि नानुभूयते विशेषरूपेण तत्स्थानं नोत्तमम्। यदि भवनस्य छाया दिवसस्य द्वितीये अथवा तृतीयप्रहरे कूपस्योपरि पतति तर्हि तत्स्थानमपि अशुद्धं मन्यते। अतः खलु उच्यते–

**देवालयं वा भवनं मठश्च भानोः करैर्वायुभिरेव भिन्नम्।**
**तन्मूलभूमौ परिवर्तनीय छाया गता यस्य गृहस्य कूपे।।[1]**

यत्र पुरातनभवनं स्यात्, जीर्णशीर्णयुक्तं स्यात्, तत्रापि वास्तुपूजनमावश्यकं तदनन्तरमेव तस्मिन्नेव स्थाने भवननिर्मातव्यम्। स्वर्णनागदन्तमाध्यमेन भग्नं करणीयं पुरातनगृहम्–

**जीर्णगृहं भित्तिभग्नं विवर्ण तत्पातव्यं स्वर्णनागस्य दन्तैः।**
**गोश्रृङ्गैर्वा शिल्पिना निश्चयेन पूजां कृत्वा वास्तुदोषो न तस्य।[2]**

एवं रीत्या कार्यं क्रियते चेत् वास्तुदोषो न भवति तत्र।

**द्वारविचारः**

भवनस्य द्वारं तलानुसारं कथं स्यादिति विषये कथितं वर्तते–

**द्वारादूर्ध्वे यद्द्वारमस्य प्रमाणं संकीर्णं वा शोभनं नाधिकं तत्।**
**ह्रस्वद्वाराण्येव यानि पृथूनि तेषां शीर्षाण्येकसूत्राणि कुर्यात्।।[3]**

एतदनुसारं विद्यालयभवनानामपि निर्माणं कर्तव्यम्।

---

1. शिल्पशास्त्रम् उद्धृतं शब्दकल्पद्रुमः
2. तत्रैव
3. तत्रैव

**वृक्षविचारः**

वृक्षाणां कियन्महत्वमस्ति जीवने कल्पयितुमपि वस्तुतस्तु वयमसमर्थाः भवामः। भवननिर्माणप्रसङ्गे शुभवृक्षाः ज्ञातव्याः। के वृक्षाः कुत्र स्युः? तत्र वर्ण्यते–

**शाकः शालमधूकसर्जखदिरा रक्तासनाः शोभना**

**एकोऽसौ सरलोऽर्जुनश्च पनसः श्रीपर्णिकाशिंशिपाः।**

**हारिद्रास्त्वपि चन्दनः सुरतरुः पद्माक्षकस्तिन्दुकः**

**नैतेऽन्येन युता भवन्ति फलदाः शाकादयः शोभनाः॥**[4]

अत्र प्रमाणितं यत् शाकवृक्षः केनापि वृक्षेण सह उत्तमो नास्तीति। परमेतादृशाः केचन वृक्षाः सन्ति, तेषां वृक्षाणामुपयोगः गृहनिर्माणे न स्यात्।

शुष्कवृक्ष–अर्धदग्धवृक्ष–पक्षीवासयुक्तवृक्ष–वायुद्वारापतितवृक्षाणां गृहे प्रयोगः नोपयुक्तः। अधिकरसयुक्ताः वृक्षाः वर्जनीयाः॥ उक्तञ्च–

**वृक्षं दग्धविशुष्ककण्टकयुतं नीडैस्तु चैत्यद्रुमं**

**क्षीरं मारुतपातितं च भवने चिञ्चाविभीतं त्यजेत्॥**[5]

यद्यपि साम्प्रतं काष्ठयुक्तविद्यालयभवनानि प्रायः न निर्मीयन्ते तथापि यत्र निर्मीयन्ते तत्र विषयोऽयं ध्यातव्यः।

**विद्यालयभवननिर्माणे वास्तुसम्बन्धितक्लेशाः**

भारतदेशः जनसंख्याबहुलदेशो वर्तते। जनसंख्या साम्प्रतमपि तीव्रगत्या वर्धमाना अस्ति। ग्रामेषु नगरेषु च सर्वत्र विद्यालयभवननिर्माणार्थं स्थानमधिकमपेक्ष्यते। यत्र स्वल्पस्थानं लभ्यते प्रायः तत्र वास्तुविद्यां प्रयुज्य भवननिर्माणं न भवति। एवमपि बहवः जनाः सन्ति यान् वयं वास्तुविदः इति वदामः परं ते वास्तुविद्यां सम्यक् रूपेण न जानन्ति। केचन विशेषज्ञाः अभियन्तारश्च विद्यामिमां नाङ्गीकुर्वन्ति, अतः तत्र काचित् भिन्नसमस्या समुत्पद्यते। भग्नविद्यालयभवनानां स्थलेऽपि नियमानुसारं तत्र नूतनविद्यालयभवनं निर्मातव्यम्। वास्तुशास्त्रं प्रति जनानामाभिमुख्यं भिन्नं भिन्नं प्रतीयते।

**भूमिपरीक्षणं पूजनविधिश्च–**

भवनानां निर्माणात् प्राक् पूजनमिदं क्रियते यतोहि मगलमाचर्यते। प्रथमतो भूमिं गोमयेनोपलिप्य कलशं संस्थाप्य गणेशं चण्डिकां क्षेत्रपालमष्टदिक्पालांश्च पञ्चोपचारैः सम्पूज्य बलिन्दत्वा भूमिपरीक्षामारभेत। तत्र हस्तमात्रं खातं कृत्वा तन्मृदा पूरयेत्। यदि पूरणकाले मृत्तिकावशिष्टा तदा शुभम्, नावशिष्टा तदाऽशुभम्। समानं चेत् मध्यममिति। अथ पुनस्तत्खातं जलपूर्णं कृत्वा ततः शतंपदं गत्वा परीक्षा विधेया, पादोनजले मध्यमं अजले त्वनिष्टं, जलपूर्णे प्रशस्तमिति। अतः खलु उच्यते–

4. शिल्पशास्त्रम् उद्धृतं शब्दकल्पद्रुमः
5. तत्रैव

**परीक्षितायां भुवि विघ्नराजं समर्चयेच्चण्डिकया समेतम्।**
**क्षेत्राधिपं चाष्ट दिगीशदेवान्सुपुष्पधूपैर्बलिभिः सुखाय।।**[6]
**खातं भूमिपरीक्षणे करमितं तत्पूरयेत्तन्मृदा**
**हीने हीनफलं समे समफलं लाभो रजोवर्धने।**
**तत्कृत्वा जलपूर्णमाशतपदं गत्वा परीक्ष्य पुनः,**
**पादोनार्द्धविहीनकेऽथ निभृत मध्याधमेष्टाम्बुभिः।।**[7]

अतः भूमिपूजनं भवननिर्माणवेलायामावश्यकम्, तत्रापि खातखननसमये यदि पाषाणादिदर्शनं तदा वासकर्तुर्धनधान्यपुण्यादिवृद्धिः भवति। रजतताम्रादिधातुदर्शनेऽपि तद्वत् शुभफलं प्राप्यते। यदि पिपीलिकामण्डुकदुष्टकीटादिदर्शनं भवति तदा तत् शुभं नास्तीति। अथ यदि तुषास्थिभस्मचर्माण्ड-सर्पणामन्यतमस्य दर्शनं तदा कर्तुर्निधनं, वराटिकादीनां दर्शने दुःख-दारिद्र्यम्। अथ कार्पासदग्धकाष्ठांगदर्शने रोगवृद्धिः, खर्परदर्शने कलिः, लौहदर्शने गृहस्वामिनः मरणमिति वर्णितम्। अतः सावधानेन उपायान् कृत्वा भवननिर्माणं करणीयम् कारणीयञ्च।

**विद्यालयभवननिर्माणप्रकाराः**

प्रायः स्थानानुसारं विद्यालयभवनानि निर्मीयन्ते। स्थानाभावे विद्यालयानां स्वरूपं भिन्नं भवति। विद्यालयस्य प्रायः एकस्मिन् कोणे प्रधानाध्यापकस्य कक्षोः तत्समीपे अन्येषां प्रकोष्ठः भवति। अथवा मध्यभागे प्रधानशिक्षकस्य कक्षः तत्समीपे अन्येषां शिक्षकाणां कक्षो भवति। अनेन विद्यालयानुशासनं प्रायः सम्यक् दृश्यते। विद्यालयस्य मध्यभागे यदि प्रधानाध्यापककक्षः स्यात्तर्हि तत्र किञ्चिदसौविध्यमपि दृश्यते। यदा अभिभावकाः प्रधानशिक्षकं मेलितुमागच्छन्ति कदाचित् छात्राः कक्षातः एव तान् अवलोकयन्ति अतः कक्षानुशासने विशृंखला दृश्यते। एवमेव शिक्षाविदां मतानि भिन्नानि सन्ति। सर्वेषां प्रकाराणां विद्यालयानां विशेषताः भिन्नाः भिन्नाः सन्ति। केषुचित् विद्यालयेषु विद्यालयस्य अन्तः क्रीडाङ्गणं, क्रीडाव्यवस्था च भवति। कुत्रचित् विद्यालयपरिसरात् बहिः क्रीडाङ्गणो भवति। सर्वकारनियमानुसारं ग्रामेषु स्थितानां विद्यालयानां समीपे जलाशयः आवश्यकः परं नगरीयविद्यालयेषु प्रायः विद्यालयस्य अन्तः जलव्यवस्था क्रियते। साम्प्रतं ग्रामीणक्षेत्रेऽपि इयं व्यवस्था क्रियमाणा अस्ति।

**विद्यालयस्यावधारणा**

विद्यालयः शिक्षायाः सक्रिय-अभिकरणमस्ति। एस. बालकृष्णजोशीमहोदयेन लिखितं यत् कस्यापि राष्ट्रस्य प्रगतिः केवलं न्यायालय-विधानसभा-उद्योगमाध्यमेन न भवति अपितु विद्यालयद्वारा भवति। (The progress of a Nation is decided not in legislatures, not in courts, not in factories but in Schools.)

---

6. उद्धृतं बृ.वा.मा. 1.116
7. उद्धृतं बृ.वा.मा. 1.106

ओटावेमहोदयः कथयति-विद्यालयः एतादृशः सामाजिक-आविष्कारः वर्तते यः विशिष्टशिक्षणद्वारा समाजस्य सेवां करोति। (The School may be regarded as a social Invention to serve Society for the specialised teaching of young).

**विद्यालयस्य भूमिका**

विद्यालयेषु छात्राणां वस्तुतः सर्वाङ्गीणविकासः जायते यथा-शारीरिक-बौद्धिक-भावात्मक-सौन्दर्यात्मक-नैतिकविकासादयः। तर्क-वितर्क-वाक्प्रतियोगिता-भ्रमण-प्रदर्शनी-सांस्कृतिककार्यक्रम-क्रीडामाध्यमेन च छात्राणां सर्वाङ्गीणविकासो भवति। विद्यालयः समाजस्य केवलं दर्पणो नास्ति अपितु समाजे आदर्शं स्थापयति। अनेनैव माध्यमेन छात्राणां कौशलं वर्धते। मूल्यानां निर्माणं तेषु भवति। विनयशीलाः भवन्ति छात्राः। अतः प्रोच्यते-

**विद्या ददाति विनयं विनयाद्याति पात्रताम्।**
**पात्रत्वात् धनमाप्नोति धनाद्धर्मः ततः सुखम्।।**[8]

विद्यालयः पुष्पोद्यानं वर्तते। यत्र पुष्परूपेण परिदृश्यन्ते छात्राः, तत्रैव तेषां परिवर्धनं प्रस्फुटनं, परिरक्षणञ्च भवति। ते छात्राः तत्र ज्ञानमुपार्जयन्ति। तद्विद्याख्यं धनं चौरस्य गोचरं न याति, सर्वथा सुखं प्रवर्धयति, प्रलयेष्वपि नाशं न प्राप्नोति। तद्विद्याभिधानधनं येषां विदुषां वर्तते तान् प्रति हे राजानः! दुराग्रहं त्यजत इति नीतिशतके वर्णितम्-

**हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा**
**ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम्।**
**कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं**
**येषां तान्प्रति मानमुज्झत नृपाः! कस्तैः सह स्पर्धते।।**[9]

**व्यावसायिकप्रशिक्षणम्**

बहवः छात्राः जीविकोपार्जनाय सन्देहयुक्ताः भवन्ति यतोहि व्यावसायिकप्रशिक्षणं सम्यक् रूपेण न प्राप्यते। अतः साम्प्रतं प्रायः विद्यालयेषु एव सर्वकारेण व्यावसायिकप्रशिक्षणं दीयते। कः छात्रः कीदृशं व्यवसायमवलम्ब्य जीविकोपार्जनं कुर्यात् इति महत्वपूर्णप्रश्नः? एतादृशी महती समस्या दृश्यते। अतः विद्यालयेषु महाविद्यालयेषु च वृत्तिमवलम्ब्य मार्गदर्शनं क्रियते। अनेन स्व-स्वक्षेत्रे छात्राः सम्यक् प्रदर्शनं कुर्वन्ति। यदा छात्राः स्वरुच्यनुसारं विषयमधिकृत्य पठन्ति तदा ते तस्मिन् क्षेत्रे निपुणाः, प्रवीणाश्च भवन्ति। एकमेव क्षेत्रमवलम्ब्य प्रयत्नं कुर्वन्ति यत् साधुभावेन कथं कार्यं सम्पादयामीति। एतत्तु विद्याद्वारा एव साध्यते। इतोऽपि अनेकलाभाः भवन्ति विद्यायाः। यथोक्तं नीतिशतके-

---

8. हितोपदेशे 6
9. नीतिशतक 16

**विद्या नाम नरस्य रुपमधिकं प्रच्छन्नगुप्तं धनं**
**विद्या भोगकरी यशः सुखकरी, विद्या गुरुणां गुरुः।**
**विद्या बन्धुजनो विदेशगमने, विद्या परं दैवतम्**
**विद्या राजसु पूज्यते न हि धनं, विद्याविहीनः पशुः॥[10]**

अपरश्च-

**येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः।**
**ते मर्त्यलोके भुवि भारभूताः मनुष्यरूपेण मृगाश्चरन्ति।[11]**

**विद्यालयद्वारा अन्ताराष्ट्रियभावनायाः विकासः**

शिक्षकाणां माध्यमेनैव छात्रेषु अन्ताराष्ट्रियभावना वर्धते। भातृत्वभावना-मानवतायाः भावना-सहयोगस्य भावनाश्चछात्रेषु समागच्छन्ति। अनेनैव मनुष्यः सम्माननं करोति। विद्यालयेन एव इमाः भावनाः समाजे वर्धन्ते। अतः खलु उच्यते-

**समानमस्तु वो मनो यथा वः सुहासति[12]**
**पश्य देवस्य कार्यं न ममार न जीर्यति[13]**
**एकं सद् विप्रा बहुधा वदन्ति[14]**
**सत्यमेव जयते नानृतम्[15]**
**अयं निजः परो वेत्ति गणना लघुचेतसाम्**
**उदारचरितानां तु वसुधैव कुटुम्बकम्[16]**

जन्मनः पश्चात् समयानुसारं बालः विद्यालयं गच्छति ज्ञानार्जनाय। तत्र षड्होरात्मकसमयः बालस्य कृते महत्वपूर्णः यतोहि गुरुणां मार्गदर्शनं प्राप्यते, विद्याभ्यासः प्रचलति, विभिन्नक्रियाकलापैः साकं योग्यता वर्धते, सत्संगतेः भावना समागच्छति मनसि। विद्यालयः समाजस्य लघ्वाकार इव। अतः यस्मिन् विद्यालये छात्रः जीवनस्य एतावान कालः यापयति। तत्रत्यपरिवेशस्य प्रभावः छात्रस्योपरि प्रभावं जनयति। अतः तस्य विद्यालयस्य निर्माणं वास्त्वनुसारं करणीयमेव।

---

10. नीतिशतक 20
11. तत्रैव 13
12. ऋग्वदे 10.191.4
13. अथर्ववेद 10.8.32
14. ऋग्वेद 1.164.46
15. मुण्डकोपनिषद 3.6
16. महोपनिषद् 4.7। इत्यादि

# वास्तुशास्त्रे आयाद्यानयनविचारः

गणेशदत्तचतुर्वेदी

**रामदैवज्ञमते आयाद्यानयनम्**

**पिण्डे नवाङ्काङ्गगजाग्निनागनागाब्धिनागैर्गुणिते क्रमेण।**

**विभाजिते नागनगाङ्कसूर्यनागर्क्षतिथ्यर्क्षखभानुभिश्च॥**

**आयो वारांशको द्रव्यमृणमृक्षं तिथिर्युतिः।**

**आयुश्चाथ गृहेरार्क्षं गृहभैक्यं मृतिप्रदम्॥**[1]

पिण्डसाधनं कृत्वा गृहपिण्डे नवस्थानेषु निर्दिष्टक्रमेण 9-9-6-8-3-8-8-4-8 निवेश्य इमानि अङ्कानि पृथक्-पृथक् संगुण्य गुण्यफले 8-7-9-12-8-27-15-07-120 अङ्कैः विभज्य यदवशिष्यते तत्क्रमशः आयः, वारः, अंशः, द्रव्यम्, ऋणम्, नक्षत्रं, तिथिः, योगः, आयुश्च भवति।

**तिथिवारलग्नानयनम्**

**आयर्क्षताराव्ययमंशकञ्च एकत्रकृत्वा विभजेत्क्रमेण।**

**तिथ्या च वारेण तथैव लग्नैः शेषेषु तान्येव भवेयुरङ्के॥**[2]

आय- नक्षत्रादीनि योजयित्वा क्रमशः 15, 17, 12 विभाजनेन यच्छेषो भवति तदेव क्रमात् तिथिः, वारः, लग्नञ्च भवति।

उदाहरणम्–

आयः 7 (गजः) नक्षत्रं (स्वाति) 15, तारा मनोहरा (2) व्यय 7, अंशः 9

संयोजनेन 7 + 15 + 2 + 7+ 9 = 40

40 ÷ 15 = लब्धि 2, शेषम् 10 = तिथिः दशमी

40 ÷ 7 = लब्धि 5, शेषम् 5 = वारः (बृहस्पतिवारः)

---

1. बृहद्वास्तुमाला पृ. 57, श्लो. 1-2
2. उद्धृत वास्तुसारः, पृ. 112, श्लो. 64

40 ÷ 12 = लब्धि 3, शेषम् 4 = लग्नम् (कर्कः)

पुनरन्यप्रकारेण=

**आयर्क्षव्ययतारकांशमधिपं योज्यं फले क्षेत्रजे।**
**भक्तार्कैरिह लग्नमष्टगुणिते लग्ने शरैर्हृते।।**
**शेषाङ्केन तिथिः स्वनामसमकं क्षेत्रे फलं तन्मिथो।**
**नन्दघ्ने मुनिभाजिते प्रविदितः सूर्यादिवारः स्फुटः।।**

आय-नक्षत्र-तारा-अंशादीन् क्षेत्रफले योजयित्वा द्वारशभिः भक्तेन यदवशिष्यते तल्लग्नं भवति। लग्नसंख्या अष्टाभिः गुणयित्वा पञ्चदशभिः विभक्तेन प्राप्तं फलं तिथिः भवति। तिथि-संख्या नवभिः गुणयित्वा सप्तभिः भक्तेन सूर्यादिवारो भवति। यथा-

आय 7, नक्षत्र 15, व्यय 7, तारा 2, अंश 9, क्षेत्रफलं = 687 सर्वेषाम् योगः 7 + 15 + 7 + 2 + 9 + 687 = 727

द्वादशभिः विभज्य 727 ÷ 12 = लब्धिः 60 शेषम् 7 लग्न (तुला)

लग्नसंख्या 7 × 8 = 56 ÷ 15 = लब्धिः 3 शेषम् 11 (तिथि)

तिथिसंख्या 11 × 9 = 99 ÷ 7 = लब्धिः 14 शेषम् 1 वार (रविवार)

अनेन प्रकारेण सर्वत्र ज्ञेयम्।

**कुत्रायादिकं न चिन्तनीयम्-**

**द्वात्रिंशाधिकहस्तमब्धिवदनं तार्णं त्वलिन्दादिकम्।**
**नैष्वायादिमीरितं तृणगृहं नान्येषु गेहेष्विदम्।।[3]**

द्वात्रिंशत् (32) हस्तमानादधिकविस्तारे गृहे चतुर्द्वारे, तृणगृहे, अलिन्दे च आयादिविचारः न करणीयः।

**अलिन्दनिर्व्यूहविनिर्गमाद्याश्चतुर्दिशं ये गृहभूषणाय।**
**आयादिकं तेषु न चिन्तनीयं यतो न ते वास्तुपरिग्रहे स्युः।।[4]**

अन्यच्च

**यत्र दैर्घ्यं गृहादीनां द्वात्रिंशद्धस्ततोऽधिकम्।**
**न तत्र चिन्तयेद् विद्वान् गुणानायव्ययादिकम्।।[5]**

---

3. बृहद्वास्तुमाला, पृ. 67, श्लो. 12
4. उद्धृतं वास्तुसारः, पृ. 113, श्लो. 66
5. बृहद्वास्तुमाला, पृ. 67, श्लो. 13

वसिष्ठेनोक्तम्

**एकादशयवादूर्ध्वं द्वात्रिंशद्धस्तकावधि।**

**तावदायादिकं चिन्त्यं तदूर्ध्वं नैव चिन्तयेत्।।[6]**

एकादशयवादधिकं द्वात्रिंशत्करपर्यन्तमेव आयादिकं विचारयेत्। नैतन्यूनं नाप्यधिकम्।

अन्यच्च–

**आयव्ययौ भूमिशुद्धिं चिन्तयेन्न महालये।**

**तृणादिगेहेषु शिलान्यासनिषेधः**

**आयव्ययौ च भूशुद्धिं तृणगेहे न चिन्तयेत्।**

**शिलान्यासादि नो कुर्यात् तथागारे पुरातने।।[7]**

आयविचारः, व्ययविचारः, भूशुद्धिश्च तृणगेहे न कर्त्तव्याः पुरातनगृहस्य जीर्णोद्धारसमये तृणगृहे च शिलान्यासः न करणीयः।

**पिण्डद्वारा वाराद्यानयनम्**

**ग्रहैर्विगुण्य भवनस्य पिण्डं विभाजितं पर्वतभिर्मुनीन्द्र।**

**शेषं भवेच्चात्र रवीन्दुभौमा बुधो गुरुर्भार्गवसूर्यनन्दनौ।।[8]**

इष्टपिण्डं नवभिर्गुणनेन सप्तभिः विभाजनेन यत् शिष्यते तद्वारः ज्ञेयः अर्थात् एकशेषे सति सूर्यः, द्विशेषे सति चन्द्रः, त्रिशेषे सति भौमः, चतुश्शेष सति बुधः, पञ्चमे शेषे सति गुरोः, षष्ठे शुक्रः, सप्तमे शेषे सति शनेः दिनं भवति।

**एतेषां फलम्**

**वाराः सूर्यारशन्यंशाः सदा वह्निभयप्रदा।**

**शेषा वारास्तथांशाश्च शुभा दीर्घप्रदास्तथा।।[9]**

सूर्यभौमशनिवाराः तेषां अंशाश्च सदा अग्निभयदाः। शेषग्रहाणां वाराः अंशाश्च गृहस्वामिनः शुभाः मङ्गलकारिणः भवन्ति।

**अंशानयनम्**

**गृहपिण्डं रसैर्गुण्यं ग्रहैश्चापि विभाजितम्।**

**यच्छेषं तद्भवेदंशस्तस्यैशश्चापि कीर्तितः।।**

6. बृहद्वास्तुमाला, पृ. 67, श्लो. 14
7. वास्तुसारसंग्रह अष्टमसोपानं, श्लो. 43
8. वा. सा. सं. नवमसोपानम्, श्लो. 1
9. तत्रैव, श्लो. 2

**अर्कश्चन्द्रः कुजो राहुजीवमन्दज्ञकेतवः।**

**भृगुपुत्रक्रमेणैव अंशाधीशाः प्रकीर्तिताः।।**[10]

गृहपिण्डं षड्भिः गुणयित्वा नवभिः विभज्य क्रमेण सूर्यादिग्रहांशस्वामिनो भवन्ति। अर्थात् एकशेषे सति सूर्यः, द्विशेषे सति चन्द्रः, त्रिशेषे सति भौमः, चतुश्शेषे सति राहुः, पञ्चशेषे सति गुरुः, षट्शेषे सति शनिः, सप्तशेषे सति बुधः, अष्टशेषे केतुः नवशेषे च शुक्रः अंशेशो भवति।

**पिण्डाद् द्रव्यानयनप्रकारः**

**पिण्डाष्टगुणितञ्चात्र सूर्यैश्चापि विभाजितम्।**

**अवशिष्टं भवेद्रव्यं तत्तन्नामाऽब्रवीदिदम्।।**

**वस्त्राणि शस्त्राणि च पुस्तकानि**

**द्रव्याणि धान्यानि वसुन्धरा च।**

**कुटुम्ब-विद्या-पशु वाटिकाश्च**

**भाण्डानि भूषाश्च धनानि सूर्याः।।**[11]

गृहपिण्डम् अष्टभिः गुणयित्वा गुणनफले द्वादशभिः भाजयित्वा यत् शेषं तदनुसारं द्रव्यं जानीयात्। एकशेषे वस्त्रम्, द्विशेषे शस्त्रम्, त्रिशेषे पुस्तकम्, चतुश्शेषे द्रव्यं (धनम्), पञ्चशेषे धान्यम्, षट्शेषे वसुन्धरा, सप्तशेषे कुटुम्बः, अष्टशेषे विद्या, नवशेषे पशुः, दशशेषे वाटिका, एकादशशेषे भाण्डभूषणं द्वादशशेषे च धनं जानीयात्।

**ऋणानयनप्रकारः**

**इहाग्निगुणितं पिण्डं वसुभिश्चैव भाजितम्।**

**अवशिष्टमृणं संज्ञं तस्येशाः कथिताः पुराः।।**[12]

गृहपिण्डं त्रिभिः गुणयित्वा अष्टभिः भाजिते यत् शिष्यते ऋणं भवति।

**नक्षत्रानयनप्रकारः**

**गृहपिण्डं गजैर्हत्वा सप्तविंशतिभिर्भजेत्।**

**यच्छेषं तद्भवेदृक्षम् अश्विन्यादिक्रमतो बुधैः।।**[13]

---

10. वा. सा. सं. नवमसोपानम्, श्लो. 34
11. बृहद्वास्तुमाला, पृ. 68, श्लो. 18,19
12. वास्तुसारसंग्रहः नवमसोपानम्, श्लो. 7
13. वास्तुसारसंग्रहः नवमसोपानम्, श्लो. 33

गृहपिण्डं अष्टभिः गुणयित्वा सप्तविंशतिभिः विभज्य यत् शेषं तत् अश्विन्यादिनक्षत्रं प्राप्यते। 'नक्षत्रफलं तु ताराद्वारा भवति।'

**तारानयनम्**

**गणेयत् स्वामी नक्षत्राद्यावदृक्षं गृहस्य च।**

**नवभिस्तु हरेद्भागं शेषास्ताराः प्रकीर्तिताः॥**

**शान्ता मनोहरा क्रूरा विजया च कलहोद्भवा।**

**पद्मिनि राक्षसी वीरा आनन्दा नवमी स्मृता॥[14]**

गृहपतिनक्षत्रादारम्भ गृहनक्षत्रं यावत् गणना कृत्वा नवभिः विभज्य यत् शिष्यते तत् तारा कथ्यते। क्रमशः 1. शान्ता 2. मनोहरा 3. क्रूरा 4. विजया 5. कलहोद्भवा 6. पद्मिनी 7. राक्षसी 8. वीरा एव 9. आनन्दा ताराः भवन्ति। एतासु तारासु तृतीया-पञ्चमी-सप्तमीतारा अशुभाः भवन्ति। मतान्तरेण जन्म-सम्पद्-विपत्-क्षेम-प्रत्यरि-साधक-वध-मैत्र-अतिमैत्राः नवविधताराः सन्ति।

**ताराफलम्**

**विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदा।**

**निधनाख्यतारका वापि सर्वथा निधनप्रदा॥**

**कश्यपमते निषिद्धताराः-**

**दत्ते दुःखं तृतीयर्क्षं पञ्चमर्क्षं यशः क्षयम्।**

**आयुः क्षयं सप्तमर्क्षं कर्तृभाद्गृहभावधि॥[15]**

एषु तृतीयविपत्तारा विपतिं ददाति प्रत्यरितारया शत्रुभयः निधनतारया च मृत्युः प्राप्यते। अतः तृतीय-पञ्चम-सप्तमताराः न शुभाः। तृतीयतारा विपत्तिदुःखदा, पञ्चमी तारा प्रत्यरि यशविनाशिनी तथा सप्तमी निधना तारा आयुःक्षयं करोति।

**वसिष्ठस्तु-**

**'गृहस्य स्वामिनश्चैव नक्षत्रैक्यं निधनप्रदम्।'**

गृहस्वामिनः तथा गृहस्य च नक्षत्रसाम्ये सति गृहस्वामिनो मृत्युर्भवति।

अन्योऽपि-**गृहगृहेशयोर्भैक्यं मृतिः स्यान्नियमेन तु।[16]**

---

14. वास्तुमण्डनम् तारानयनम्, पृ. 100, श्लो. 47-48
15. वास्तुसारसंग्रहः नवमसोपानम्, श्लो. 34
16. बृहद्वास्तुमाला, पृ. 111, श्लो. 5

# वास्तोर्वैशिष्ट्यम्

**मृत्युञ्जयत्रिपाठी**

भारतीयसंस्कृतिः संस्कृतवाङ्मयश्च इह जगति मूर्द्धन्यमिति नैवात्युक्तिः। यतो हि अस्य विस्तृतं सुसमृद्धञ्च सर्वाङ्गपूर्णकलेवरं सर्वानपि विस्मापयति। अत्र अनादिकालादारभ्य साम्प्रतिकयुग-पर्यन्तमपि अनवरतरूपेणोपचीयमानः शाश्वतः सार्वभौमश्च ज्ञाननिधिः दृश्यते। वेदारेवास्माकं संस्कृतसाहित्यस्य संस्कृतेश्च आधारभूताः सन्तीति पूर्वकालादेव सिद्धः।

स्थापत्यवेदः वास्तुशास्त्रं वा अथर्ववेदस्योपवेद अस्ति। वेदेषु पुराणेषु अन्यग्रन्थेष्वपि च अस्य शास्त्रस्य यत्र-तत्रोल्लेखः प्राप्यते। वैदिककालादेव वास्तुशास्त्रस्य महत्वं प्रतिपादितमस्ति। तस्योन्नतं रूपमेव अग्रे अन्यग्रन्थेषु दृश्यते। जनैरिदं शास्त्रं व्यवहारशास्त्रत्वेन समाद्रियते। इदं शास्त्रं शास्त्रदृष्ट्या व्यवहारदृष्ट्या च अन्यशास्त्रेषु शीर्षस्थत्वेन स्मर्यते।

आवास एव सर्वेषां मनुष्यमनुष्येतरप्राणिनां कृते आवश्यकोऽस्ति। सर्वे प्राणधारिणः आवासस्य अन्वेषणं कुर्वन्ति। सर्वे प्राणधारिणः आवासे निवासं कुर्वन् स्वावश्यकतानामुपभोगं कुर्वन्ति अपि च सुविधां सुरक्षाञ्च अनुभवन्ति।

पुराकाले मनुष्याः वनेषु गह्वरेषु च निवसन्ति स्म। तस्मिन् समये भवनादिषु आवासीयव्यवस्था नासीत्, परं तस्मिन् समयेऽपि मनुष्याः आत्मरक्षणार्थं समयोचित-निवासस्थानस्य चयनं कुर्वन्ति स्म। प्राचीनकालादेव ऋषिभिः प्रणीतविधीनां प्रयोगं कृत्वा विभिन्नानां नगराणां, राजप्रासादानां, देवालयानाञ्च निर्माणं भवन्तिस्म। इदानीमपि वयम् आवासीय-व्यावसायिक-धार्मिकभवनानाञ्च निर्माणं कुर्मः। शास्त्रानुसारेण यस्यां भूमौ भवनादिकं निर्मीयते अथवा वासयोग्यः भूखण्डः भवनञ्च वास्तुशब्देनाभिधीयते। 'मयमतम्' नामाख्ये ग्रन्थे वास्तुशास्त्रविषये समुचितमुक्तं यद् देवाः मानवाश्च यत्र निवसन्ति तदेव वास्तु। अपि च वास्तुशास्त्रस्य चत्वारः भेदाः सन्ति, परं तेषामपि 'भूमि' भेद एव प्रधानमस्ति। तद्यथा–

**अमर्त्याश्चैव मर्त्याश्च यत्र यत्र वसन्ति हि।**
**तद् वस्त्विति मतं तज्ज्ञैस्तद्भेदं च वदाम्यहम्॥**[1]
**भूमिप्रासादयानानि शयनं च चतुर्विधम्।**
**भूरेव मुख्यवस्तु स्यात्तत्र जातानि यानि हि॥**[2]

---

1. मयमतम्, अध्याय 2, श्लोक 1

**प्रासादादीनि वास्तूनि वस्तुत्वाद् वस्तुसंश्रयात्।**
**वस्तून्येव हि तान्येव प्रोक्तान्यस्मिन् पुरातनैः।।**[3]

वस्तुतः वास्तुशास्त्रानुसारेण भवननिर्माणात् पूर्वं भूखण्डचयनं, भूशोधनं, भूखण्डोपरि च दिक्शोधनं कर्तव्यम्। तदनन्तरं स्वप्रयोजनानुसारेण वास्तुशास्त्रीयनियमानुसारेण च भवनानां निर्माणं करणीयम्। वास्तुशास्त्रीयनियमाननुसृत्यैव वयं भवनानां, गृहाणां, राजप्रासादानां, नगराणां, देवालयानाञ्च उत्तमोत्तमशुभफलं प्राप्तुं शक्नुमः।

भारतवर्षस्य संस्कृतिः यथा प्राचीनतमा अस्ति तथैव वास्तुशास्त्रीयं ज्ञानमपि प्राचीनतममस्ति। आधुनिककाले समुन्नतराष्ट्राः यस्याः कलायाः विषये जानन्ति तासु कलासु वास्तुकला, मूर्तिकला, चित्रकला, पात्रनिर्माणकला इत्यादयः तु वैदिककालादेव प्रसिद्धाः आसन्। वैदिककाले वास्तुशास्त्रीयज्ञानं स्वोन्नतरूपेणोपस्थित आसीत्।

'वस्' धातोः निवासार्थे प्रयोगः। **''वस् + वसेस्तव्यत् : कर्तरिणिच्च''।**[4] यस्याभिप्रायः 'वसन्ति प्राणिनो यत्र'। 'वस्' निवासार्थे उणादि तुण् प्रत्ययाऽनन्तरं 'वस्' धातोः 'व' शब्दस्याकारं दीर्घकरणार्थम् अगारेणिच्च् सूत्रस्य प्रयोगो भवति। अनेन सूत्रादिकार्यानन्तरं 'वास्तु' शब्दस्योत्पत्तिः भवति, यस्याभिप्रायः यत्र जनाः निवसन्ति। **'वसन्त्यस्मिन् इति वास्तु'।**[5] जटाधरमहोदयानुसारेण वेश्मभूः, पोतः, वाटी इत्यादयः वास्तुशब्दस्याभिप्रायाः सन्ति।[6] रत्नावल्यामपि वास्तुशब्दस्य कृते वाटिकागृहपोतकशब्दौ स्तः।[7]

संस्कृतवाङ्मये वास्तुशास्त्रीयज्ञानस्योल्लेखः बहुषु ग्रन्थेषु प्राप्यते। सर्वप्रथमम् अस्य शास्त्रस्याधाराः तु वेदाः सन्ति, अस्य शास्त्रस्य ज्ञानं न केवलं वेदेषु अपि तु आगमग्रन्थेषु, पुराणेषु, साहित्येषु, काव्येषु चापि विद्यते। अस्मिन् विषये विश्वकर्मणः विश्वकर्माप्रकाशः, मयस्य मयमतम्, अपराजितपृच्छा, जयपृच्छा इत्यादयः बहवः ग्रन्थाः सुप्रसिद्धाः सन्ति।

## वेदेषु वास्तुः

अस्य शास्त्रस्य विषये वेदेषूपलब्धप्रसङ्गैः ज्ञायते। ऋग्वेदस्य दशममण्डले इन्द्रस्य सम्बोधनं **'स्कम्भीयान्'**[8] अस्ति। स्कम्भशब्दस्याभिप्रायः स्तम्भो भवति। ऋग्वेदस्य अष्टममण्डले वर्णितं यद् गृहस्य विभिन्नभागानाम् आधारभूताः स्तम्भा एव भवन्ति।[9] अनेनैव ऋग्वेदस्य प्रथममण्डले वर्णितमन्त्रे

2. मयमतम्, अध्याय 2, श्लोक 2
3. मयमतम्, अध्याय 2, श्लोक 3
4. शब्दकल्पद्रुमः, खण्ड 4, पृ. सं. 358
5. शब्दकल्पद्रुमः, खण्ड 4, पृ. सं. 358
6. उद्धृतं शब्दकल्पद्रुमः, खण्ड 4, पृ. सं. 358
7. उद्धृतं शब्दकल्पद्रुमः, खण्ड 4, पृ. सं. 358
8. उद्धृतं भारतीय वास्तु विद्या के वैज्ञानिक आधार, पृ. सं. 10
9. उद्धृतं तत्रैव द्रष्टव्यं, पृ. सं. 10

तु घनाधारोपरि स्थितत्रिस्तम्भानां वर्णनमस्ति, येषामुपरि त्रिकोणीयस्य वा फलकयुक्ततलस्य निर्माणं भवति स्म।[10] ऋग्वेदस्य दशममण्डले स्तम्भस्य आधारः **'धरूण'** नाम्ना ज्ञायते।[11] वेदेषु वास्तुपुरुषस्य प्रीतिकामनया ग्रथितमन्त्राणाम् अध्ययनेनैव अस्य शास्त्रस्याधारविषये सम्यक्तया ज्ञातुं शक्यते। यथा–

**वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः।**
**यत् त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे॥[12]**
**वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो।**
**अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व॥[13]**

वैदिककालेऽपि अनेनैव गृहनिर्माणात् पूर्वं गृहनिर्माणसमये वा गृहस्वामी वास्तुपुरुषं प्रार्थयति।

**आगमग्रन्थेषु वास्तुः**

संस्कृतेः सभ्यतायाश्चोद्भवः सर्वप्रथमं भारतवर्षे अभवत्, एतत्तु पुरातात्विक-अन्वेषणैः ज्ञायते। पुरातात्विकभग्नावशेषैः ज्ञायते यत् शैवागमानां वास्तुकलायाश्चान्तरसम्बन्ध आसीत्। शैवागमेषु वर्णितं वास्तुशास्त्रीयज्ञानं प्राचीनतममस्ति। द्विनवतिशैवागमाः सन्ति। सामान्यतया शैवागमाः चतुर्षु पादेषु विभक्ताः भवन्ति–ज्ञानपादः, योगपादः, चर्यापादः, क्रियापादः। सम्पूर्णवास्तुशास्त्रीयज्ञानं क्रियापाद एव प्रतिपादितमस्ति। कामिकाऽगमे वर्णितेषु पञ्चसप्तति-अध्यायेषु नवदशाध्यायानां विषयः वास्तुज्ञानमस्ति। अनेन प्रकारेण करणागमे तृतीयाध्यायात् अष्टममध्यायपर्यन्तं षट्सु अध्यायेषु वास्तुकलायाः मूर्तिरचनायाश्च वर्णनमस्ति। सुप्रभेदागमे पञ्चदशाध्यायेषु वास्तुशास्त्रीयज्ञानमस्ति।[14]

**पुराणेषु वास्तुः**

अष्टादशानां पुराणानां सिंहावलोकनेन ज्ञायते यद् द्वादशपुराणेषु वास्तुशास्त्रीयवर्णनं दृश्यते। तत्रापि मत्स्यपुराणे अष्टसु अध्यायेषु, गरुडपुराणे चतुर्षु अध्यायेषु, अग्निपुराणे त्रिषु अध्यायेषु, विष्णुधर्मोत्तरपुराणे त्रिचत्वारिंशदध्यायेषु, भविष्यपुराणेऽपि एकस्मिन्नध्याये वास्तुशास्त्रीयज्ञानस्य विशदविवेचनं क्रियते।[15]

**प्राचीनग्रन्थेषु वास्तुः**

श्रीवाल्मीकिकृतरामायणस्य किष्किन्धाकाण्डे पञ्चाशत्सर्गतः त्रिपञ्चाशत्सर्गपर्यन्तं भूमावुपरि निर्मितानां दुर्गाणां पर्वतानाञ्च वर्णनं प्राप्यते। अपि च सुन्दरकाण्डे लंकायां स्थितभवनानां सौन्दर्यस्य वर्णनमपि वास्तुशास्त्रस्यैवोदाहरणमस्ति। महाभारते कृतवर्णनानुसारेण मयकृतइन्द्रप्रस्थनगरं

---

10. उद्धृतं तत्रैव द्रष्टव्यं, पृ. सं. 10
11. उद्धृतं तत्रैव द्रष्टव्यं, पृ. सं. 10
12. ऋग्वेदः, मण्डल 7, सूक्त 54, मन्त्र 1
13. ऋग्वेदः, मण्डल 7, सूक्त 54, मन्त्र 2
14. भारतीय वास्तु विद्या के वैज्ञानिक आधार, पृ. सं. 14
15. भारतीय वास्तु विद्या के वैज्ञानिक आधार, पृ. सं.15

वास्तुशास्त्रस्योत्कृष्टमुदाहरणमस्ति। भरतमुनेः नाट्यशास्त्रे वास्तुशास्त्रीयनियमानुसारेणैव रंगशालायाः निर्माणप्रविधीनां विवेचनं महत्वञ्च प्रतिपादितमस्ति। अनेनैव आचार्यकौटिल्यस्यार्थशास्त्रे, आचार्यशुक्रस्य शुक्रनीतौ च देवालयानां, राजप्रासादानां, दुर्गाणां, दुर्गे स्थितनगराणां, नगरे विभिन्नानां प्रकाराणां भवनानां निर्माणप्रविधीनां नियमोपनियमानाञ्चोल्लेखः प्राप्यते।

अनेन प्रकारेण वैदिककालादारभ्य अर्वाचीनकालपर्यन्तं वास्तुशास्त्रीयज्ञानस्य विकासो दरीदृश्यते। तत्र मध्यकालीनयुगे अर्वाचीनकाले च अनेकानेकवास्तुशास्त्रीयग्रन्थानां रचना जाता, यत्र वास्तुशास्त्रीय-वैदिकपरम्परायाः मध्यकालीनसंस्कृतेश्च दर्शनं भवति।

पृथिव्यां स्थितसर्वविधजीवानां तत्वानाञ्च निर्माणं पञ्चमहाभूतैरभवत्। यथा अस्माकं शरीरस्य पञ्चमहाभूतानां वातावरणेन सह सामञ्जस्यं भवति तथैव भवनानां स्थितपञ्चमहाभूतानां वातावरणेन सह सामञ्जस्यं भवति। अतोऽत्र पञ्चमहाभूतानां विवेचनं तारतम्यं च द्रष्टव्यम्। यथा–

**पृथ्वी**

पृथ्वी एव अस्माकं शारीरिकमानसिकविकासस्याधारभूता। पृथिवीं विना वयम् आवासस्थानस्य जीवनस्य च कल्पनामपि कर्तुं न शक्नुमः। प्राणिनां शरीरस्य निर्माणं पञ्चमहाभूतैः भवति। परं शरीररचनायां तु पृथिव्या एव प्राधान्यमस्ति। एतस्यानन्तरं जल-तेज-वायु-आकाशादिकानां भागोऽपि क्रमशः अवरोहक्रमेण भवति। परमत्र तत्त्वदृष्ट्या पृथिव्याः प्राधान्येन सर्वेषां प्राणिनां पृथिव्या सह नैसर्गिकभावनात्मकश्च सम्बन्ध अस्ति। अस्मिन् विषये वेदेषूक्तं **'माता भूमी पुत्रोऽहं पृथिव्याः'**। अनेन वास्तुशास्त्रेऽपि भवननिर्माणात् पूर्वं पृथिव्याः तत्वविचारः क्रियते। यथा–अस्मिन् शास्त्रे भूमेः परीक्षणं, भूखण्डस्य वर्णः, स्वादः, गन्धादिकानां गुणानां परीक्षणं, भूमेः प्लवत्वं, भूखण्डस्याकारः, भूखण्डस्य समीपे स्थित मार्गाणां, वृक्षाणां, विविधवेधानाञ्चाध्ययनं क्रियते।

**जलम्**

यत्र जलमस्ति तत्र सर्वेषां प्राणिनां निवासो भवति। जनाः नगराणां स्थापनाऽपि तत्रैव कुर्वन्ति यत्र जलस्याभावो न विद्यते।

वास्तुशास्त्रे भवनेषु शुद्धजलप्राप्त्यर्थं नलिका-कूप-नलकूप-भूमिगतजलागार-तलोपरिस्थित-जलागारादीनां व्यवस्था क्रियते। भवनेषु यथा शुद्धजलस्य व्यवस्था भवति तथैव अशौचजलस्य निष्कासनार्थमपि व्यवस्था भवति। वास्तुशास्त्रानुसारेणैव भवनेषु जलस्य व्यवस्थां दृष्ट्वा तलानां फलकस्य निर्माणं भवति।

**तेजः ( प्रकाशः )**

ताप एव जीवनस्य लक्षणं भवति। प्राणिनां शरीरे यावत् तापः (अग्निः) अनुभूयते तावदेव तेषां जीवनमपि भवति। सम्पूर्णविश्वे सूर्य एव ऊर्जायाः ऊष्मायाश्च प्रधानस्रोत अस्ति। सूर्यः विश्वस्यात्माऽपि अस्ति। सूर्यस्य गतिकारणात् भूमण्डले अहोरात्रस्य व्यवस्था भवति, अनेनैव ऋतुपरिवर्तनं भवति, पूर्णिमायाम् अमायां वा समुद्रे पृथिव्याञ्च गर्भे विचलनं भौगोलिकपरिवर्तनं च भवति। अतः

प्रत्येकं प्राणिनां जीवने सूर्यस्य महत्वं दृश्यते एव।

वास्तुशास्त्रे सूर्यस्य प्रकाशस्य, तापस्य अपि च भौगोलिकपरिस्थितिदृष्ट्या भवननिर्माणप्रविधीनां नियमोपनियमानाञ्च वर्णनं क्रियते। अस्मिन् शास्त्रे द्वार-अङ्गण-वातायनादीनां निर्माणं वास्तुशास्त्रीय-नियमानामनुसारेणैव भवनेषूचितप्रकाशकामनया क्रियते।

**वायुः**

जलमिव वायुरपि सर्वेषां प्राणिनां कृते मइत्वपूर्णो वर्तते। अस्माकं शरीरे दशप्राणवायवः सन्ति, येषां प्राण-अपान-व्यान-उदान-समानसंज्ञकाः पञ्च प्राणवायवः सम्पूर्णशरीरस्य सञ्चालनं कुर्वन्ति। वायुः न केवलं मानवानाम् अपि तु सर्वेषां प्राणिनां कृते आवश्यकम् अस्ति। वायुना मानवानां शारीरिक-मानसिकयोः विविधगतिविधीनां विकासो भवति।

वास्तुशास्त्रीयपद्धतौ भवनेषु अङ्गण-वातायन-द्वार-विविधतलविधान-गृहसमीपवृक्षादिकानां विचारो वायुतत्वस्य संतुलनार्थं क्रियते।

**आकाशः**

पाञ्चभौतिकतत्वेषु आकाशस्य एव बाहुल्यमस्ति, यः सर्वव्यापक अस्ति। यत्र किमपि नास्ति तत्राकाशः भवति, अस्मिन् विषये कथ्यते हि 'सावकाश एव आकाशः'। आकाशे ब्रह्माण्डस्य स्थितिकारणात् अखिलब्रह्माण्डे किमपि स्थानं नास्ति यत्र आकाशो न भवति। अस्माकं शरीरस्य आन्तरिकबाह्यस्थितिगत्यादिकाः सर्वाः क्रियाः आकाशे एव भवितुमर्हन्ति। वयम् आकाशतत्वेन श्रोतुं शक्नुमः, आकाश एव सर्वविधध्वनितरङ्गाणां माध्यमो भवति।

वास्तुशास्त्रीयनियमानुसारेण भवनेषु शालाविधानस्य, तलविधान, रिक्तस्थानस्य, अङ्गणस्य, द्वारस्य, वातायनस्य, ब्रह्मस्थानादिकस्य च विचार आकाशतत्वस्योचितोपयोगकरणार्थं क्रियते।[16]

**पञ्चमहाभूतेषु तारतम्यता**

पञ्चमहाभूतेषु कस्य तत्वस्योपयोगः महत्वञ्च अधिकः, अस्मिन् विषये किमपि कथयितुं न शक्यते, तथापि वास्तुशास्त्रस्य दृष्ट्या एतेषां मध्ये तारतम्यता वर्तते। तत्र पञ्चमहाभूतानां गुणाः—

| पञ्चमहाभूतानि | सामान्यगुणः | विशिष्टगुणः |
|---|---|---|
| पृथिवी | शब्दः, स्पर्श, रूपम्, रसः, गन्धः | गन्धः |
| जलम् | शब्दः, स्पर्श, रूपम्, रसः | शीतलस्पर्शः (रसः) |
| तेजः | शब्दः, स्पर्श, रूपम् | उष्णस्पर्शः (रूपम्) |
| वायुः | शब्दः, स्पर्शः | रूपरहितस्पर्शः |
| आकाशः | शब्दः | शब्दः |

---

16. भारतीय वास्तुशास्त्र, पृ. सं. 18

पृथिवीत आरभ्य आकाशपर्यन्तं क्रमेण गुणानां ह्रासो भवति। अत्र वास्तुशास्त्रदृष्ट्या पञ्चमहाभूतेषु पृथिव्याः महत्त्वपूर्णस्थानमस्ति।

प्रकृति एव विविधशक्तीनां कोषः, अनया सृष्टेः विकासः लयश्च भवति। वास्तुशास्त्रे एतासु प्राकृतिकशक्तिषु गुरुत्वाकर्षण-चुम्बकीयबल-सौर-शक्तीनामध्ययनं विशेषरूपेण भवति। अस्मिन् शास्त्रे आभिः शक्तिभिः भवननिर्माणं अपि च तत्र निवासिनां प्राणिनां शारीरिकमानसिकविकासाद्यध्ययनं क्रियते।

**गुरुत्वाकर्षणबलम् :**

यथा पृथिव्यां शब्दः, रसः, रूपम् स्पर्शः, गन्धश्च एते पञ्चगुणाः सन्ति तथैव तस्यां प्राकृतिकशक्तिषु गुरुत्वाकर्षणबलं चुम्बकीयबलं च शक्तिद्वयं एते भवति। अत्राकर्षणशक्तेरभिप्रायः अस्माकं पृथिव्यां व्याप्तगुरुत्वबलेन भवति। अस्मिन् विषये भास्कराचार्येण स्वसिद्धान्तशिरोमणावुक्तम्–

**आकृष्टशक्तिश्च मही तया यत् खस्थं गुरुं स्वाभिमुखं स्वशक्त्या।**

**आकृष्यते तत्पततीव भाति समे समन्तात् क्व पतत्वियं खे।।**[17]

पृथिव्यां व्याप्तगुरुत्वाकर्षणशक्त्या न केवलं निर्मितभवनानां स्थायित्वं अपि तु अस्माकं जीवनस्य सर्वासु क्रियासु गतिशीलत्वं प्राप्यते। वास्तुशास्त्रे गुरुत्वाकर्षणाधारे चतुर्णां प्रकाराणां गृहाणां वर्णनं प्राप्यते। तद्यथा–पर्णकुटी, मृत्तिकया निर्मितभवनं, इष्टिकया निर्मितभवनं, पाषाणेन निर्मितभवनञ्च। केषाञ्चन आचार्याणामनुसारेण तु काष्ठनिर्मितभवनानि अपि सन्ति। अस्मिन् विषये बृहद्वास्तुमालायामुक्तम्–

**कोटिघ्नं तृणजे पुण्यं मृण्मये दशसंगुण म्।**

**ऐष्टिके शतकोटिघ्नं शैलेऽनन्तं फलं गृहे।।**[18]

**चुम्बकीयबलम् :**

सम्पूर्णब्रह्माण्डे चुम्बकीयक्षेत्रं वर्तते। अस्मिन् ब्रह्माण्डे स्थितानां सर्वेषां ग्रहाणां नक्षत्राणां च परस्परं चुम्बकीयसम्बन्धो भवति। सौरपरिवारस्य अन्यग्रहसदृशं पृथिव्यामपि चुम्बकीयबलं विद्यते। चुम्बकस्य ध्रुवद्वयं भवति–1. उत्तरध्रुवः, 2. दक्षिणध्रुवश्च। तथैव पृथिव्या अपि ध्रुवद्वयमस्ति उत्तरः दक्षिणश्च। भूमे इव अस्माकं शरीरेऽपि ध्रुवद्वयं भवति शिरः उत्तरध्रुवः पादश्च दक्षिणध्रुवः, अस्मात् कारणात् वास्तुशास्त्रस्याचार्यैः शयनसमये शिरस्थितिः दक्षिणदिशायां कथिता। बृहत्संहितायामुक्तं हि–

**नोत्तरापरशिरः न च नग्नो नैव चार्द्रचरणः श्रियमिच्छन्।**[19]

वास्तुशास्त्रे चुम्बकीयशक्तीनां प्रभावानुसारेण भवनेषु विविधनियमोपनियमानां वर्णनं क्रियते। यथा–भवनस्य मध्यभागे स्तम्भादिकं न भवेत्, उत्तरदिशि वातायनद्वारादिकानां बाहुल्यं भवेत्, भवनस्य

17. सिद्धान्तशिरोमणिः, भुवनकोशः, श्लोक सं. 6
18. बृहद्वास्तुमाला, गृहनिर्माण हेतुः, श्लोक सं. 5
19. बृहसंहिता, वास्तुविद्या अध्यायः, श्लोक सं. 124

दक्षिणभागः उच्चो भवेत्। अनेन प्रकारेण वास्तुशास्त्रीयनियमानुसारेण भवननिर्माणेन भवनस्थजनानां सर्वविधविकासो भवति।

**सौर-ऊर्जा :**

पृथिव्यामुपरि ऊर्जायाः प्रधानस्रोतः सूर्य अस्ति। सूर्यात् निर्गमितकिरणैः पृथिव्याम् ऊर्जायाः ऊष्मायाः प्रकाशस्य च संचारो भवति। सूर्यात् निस्सरितप्रकाशस्य त्रिषु भागेषु विभाजनं क्रियते। पराबैंगनीप्रकाशः, वर्णक्रमप्रकाशः, रक्ताभप्रकाशश्च।

पराबैंगनीप्रकाशः न केवलं शीतलं भवति अपि तु आरोग्यप्रदोऽपि भवति। सूर्यस्य प्रकाशविषये तु निम्नरीत्या ज्ञातुं शक्यते। तद्यथा–

| **प्रकाशः** | **प्रभावः** | **फलम्** |
|---|---|---|
| **पराबैंगनीप्रकाशः** (नीललोहितवर्णः, नीलवर्णः, आकाशीयवर्णः) | लघुः | शीतलः, रक्तकणिकावर्धकः, क्षयरोगनाशकः, पित्तजरोगनाशकः, ज्वरनाशकः, पुष्टिदायकश्च भवति। |
| **वर्णक्रमप्रकाशः** (नीललोहितवर्णः, नीलवर्णः, नारङ्गवर्णः, रक्तवर्णः, आकाशीयवर्णः, हरितवर्णः, पीतवर्णः) | मध्यमः | समशीतोष्णः, वातजकफजव्याधिनां नाशकः, रक्तशोधकश्च भवति। |
| **रक्ताभप्रकाशः** (पीतवर्णः, नारङ्गवर्णः, रक्तवर्णः) | तीव्रः | ऊष्णः, कफजव्याधिनाशकः, उदररोगनाशकः, हृदयरोगनाशकः, मानसिकशक्तिवर्धकश्च भवति। |

सूर्य एव अस्माकं जीवने गतिं प्रददाति अपि च अस्माकं नित्यक्रियाणां संचालनं करोति। सारावलीग्रन्थकारेण ग्रन्थस्यारम्भे एव उक्तम्–

**यस्योदये जगदिदं प्रतिबोधमेति मध्यस्थिते प्रसरति प्रकृतिक्रियासु।**
**अस्तंगते स्वपिति चोच्छ्वसितैकमात्रं भावत्रये स जयति प्रकटप्रभावः।।**[20]

अनेन वास्तुशास्त्रे सौरप्रकाशस्य लाभप्राप्त्यर्थं भवनेषु पूर्वदिशायां द्वारवातायनादिकानां निर्माणस्य निर्देशः प्रदत्तः अपि च सायंकालीनरक्ताभप्रकाशस्य अवरोधार्थं भवनस्य पश्चिमदिशायां वृक्षारोपणस्य विधानमस्ति।

---

20. उद्धृतं भारतीय वास्तु विद्या के वैज्ञानिक आधार, पृ. सं. 37

# वास्तुनि जलव्यवस्था

सोनूशर्मा

जलमेव जीवनमस्ति। जलेन विना जीवनं न सम्भाव्यते। अतः जलं कस्यापि जीवस्य अनिवार्यघटकमस्ति प्रथमावश्यकता च वर्तते। जलमेव प्राणः, प्रभा एवं पौरुषः अस्ति। जलं सरलतया सुलभमस्ति तथैव दुर्गमं च दुःसाध्यमपि अस्ति। वैदिकवाङ्मये जलस्य 100 अपरनामानि विद्यन्ते।[1] यथा–

**कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम्।**

**अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्।।[2]**

अर्थात्–पानीयं, सलिलं, नीरं, कीलालं, जलं, अम्बु, आपः, वारः, वारि, कं, तोयं, पयः (पयस्), पायः (पायस्), उदकं, जीवनं, वनं, अम्भः (अर्एभस्), अर्णः (अर्णम्), अमृतं तथा घनरसः इत्यादयः समानार्थीशब्दाः वर्तन्ते। जलस्य गुणाः अपि निम्नोक्तश्लोके दृश्यते–

**पानीयं श्रमनाशनं क्लमहरं मूर्च्छापिपासापहं**

**तन्द्राच्छर्दिविबन्धहृद्बलकरं निद्राहरं तर्पणम्।**

**हृद्यं गुप्तरसं ह्यजीर्णशमकं नित्यं हितं शीतलं**

**लघ्वच्छं रसकारणं निगदितं पीयूषवज्जीवनम्।।[3]**

अर्थात्–जलं श्रमहरं, क्लान्तिनाशकं, मुर्च्छा तथा पिपासानाशकं, तन्द्रा–वमन–विबन्धनाशकं, बलकारकं, निद्राहरं, तृप्तिदायकं, हृदयस्य कृते हितकरं, अव्यक्तरसयुक्तं, अजीर्णशामकं, सर्वदा हितकरं, शीतलं, लघुः, स्वच्छं, सम्पूर्ण मधुरादिरसाणां कारणमेवं अमृतसमानं जीवनदाता इत्यादिभिः जीवनमस्ति। पञ्चतत्वेषु अपि जलमपि एकं तत्वमस्ति। विभिन्नस्रोतेषु प्राप्तस्य जलस्य संज्ञा भिन्ना–भिन्ना वर्तते। यथा- तरङ्गस्य जलम् अर्णः कथ्यते। आधारस्य जलम् आपनोति, वहति जलं सलिलं तथा तरल इति नाम्ना ज्ञायते। वैदिकरूपेण उदक् कथ्यते, औषधीयरूपेण अमृतं ख्यातम्। विष्णुधर्मोत्तरपुराणे जलस्य महत्ता तथा जलाशयनिर्माणमाहात्म्यवर्णनं सुन्दररूपेण विद्यते। यथा हि–

1. निघण्टु 1.12
2. अमरकोष 1/10/4/2/4
3. भावप्रकाशः (निघण्टु युक्त), वारिवर्ग–1–2

**उदकेन विना वृत्तिर्नास्ति लोकद्वये सदा।**
**तस्माज्जलाशयाः कार्याः पुरुषेण विपश्चिता॥**
**अग्निष्टोमसमः कूपः सोऽश्वमेधसमो मरौ।**
**कूपः प्रवृत्तपानीयः सर्वं हरति दुष्कृतम्।**
**कूपकृत्स्वर्गमासाद्य सर्वान् भोगान् समश्नुते।**
**तत्रापि भोगनैपुण्यं स्थानाभ्यासात् प्रकीर्तितम्॥**[4]

विष्णुधर्मोत्तरपुराणे दकार्गलप्रशंसायां भूलोके स्वर्गलोके च सलिलेन विना जीवने वृत्तिर्नास्ति इति दर्शितम्। धार्मिकैः विद्वज्जनैः भिन्न-भिन्नस्थलोपरि जलाशयाः कार्याः। कूपनिर्माणस्य फलम् अग्निष्टोमसमः प्राप्यते। यदा कूपः मरुभूमौ निर्मीयते तदा तत्फलमश्वमेधसमं भवति। बहुजलयुक्तकूपनिर्माणेन निर्मातृणां सर्वदुष्कृत्यानि नश्यन्ति। कूपनिर्माता स्वर्गे गत्वा सर्वेषां सुखानामुपभोगं करोति। तत्रापि स्थानाभ्यासात् भोगेनैपुण्यं प्रकीर्तितम्। राजवल्लभवास्तुशास्त्रग्रन्थानुसारम्–

**चिरं कृतं जीवनमेव येन तद् गोपदैकेन समं पृथिव्याम्।**
**सः षष्टिसंख्यं च सहस्त्रवर्षं स्वर्लोकसौख्यान्यखिलानि भुङ्क्ते॥**[5]

जलं सदैव जीव-जन्तूनां रक्षणं करोति। यः गोपदैकेन समं भूमौ जलाशयस्य निर्माणं करोति सः षष्टिसहस्त्रवर्षपर्यन्तं स्वर्गलोके निवसति। प्रासादमण्डनग्रन्थे अपि सूत्रधारमण्डनः जलाशयस्य निर्माणस्य पुण्यम् अनेन प्रकारेण कथयति –

**जीवनं वृक्षजन्तूनां यः करोति जलाशयम्।**
**दत्ते वा स लभेत् सौख्यमुर्व्यां स्वर्गे च मानवः॥**[6]

अर्थात् वनस्पति-जन्तु वृक्षादीनां जीवमात्राणां च जीवनं जलमस्ति। यः जलाशयस्य निर्माणं करोति सः सर्वसुखानामुपभोगं कृत्वा स्वर्गं लभते। वास्तुमण्डनेऽपि जलाशयनिर्माणस्य माहात्म्यं प्रदर्शितमस्ति।[7] भविष्यपुराणेऽपि जलाशयनिर्माणस्य महत्वे कथितं यत्–

**तडागं देवभवनं वापीवृक्षो घनच्छदः॥**
**चतुर्थकं फलं प्राप्तं कारितेऽस्मिंश्चतुष्टये।**
**यथा मातुः समाचष्टे पुत्रः शीलं स्वकैर्गुणैः॥**

---

4. विष्णुधर्मोत्तरपुराणम्, उद्धृत बृ.वा.मा.टीका पृ. 232
5. राजवल्लभवास्तुशास्त्रम्, (जुगनू), अ. 4.35
6. प्रासादमण्डनम्, अ. 8.95
7. वास्तुमण्डनम्, अ. 3.84-85

**तथा स्वादेन च जलं कर्तुः सर्वं शुभाशुभम्।**
**अतः शुभागतं द्रव्यं तडागादिषु लापयेत्।।**[8]

बृहत्संहितायां वराहमिहिराचार्यस्य मतानुसारम्–

**धर्म्यं यशस्यं च वदाम्यतोऽहं दकार्गलं येन जलोपलब्धिः।**
**पुंसां यथाङ्गेषु शिरास्तथैव क्षितावपि प्रोन्नतनिम्नसंस्थाः।।**
**एकेन वर्णेन रसेन चाम्भश्च्युतं नभस्तो वसुधाविशेषात्।**
**नानारसत्वं बहुवर्णतां च गतं परीक्ष्यं क्षितितुल्यमेव।।**[9]

एतत् दकार्गलं धर्मं कीर्तिञ्च प्रददाति। यथा मानवशरीरे रक्तशिराजालो वर्तते, तेनैव प्रकारेण भूमावपि जलशिराः सन्ति। यद्यपि आकाशाद् धराया उपरि एकेन वर्णेन रसेन चाम्भश्च्युतं तथापि भूमेः विशेषताकारणात् भिन्न-भिन्नरस-वर्णयुक्तं भवति। अतः भूमेः रस-वर्णानुसारं जलस्य रस-वर्णादीनां विचारोऽपि क्रियते।

**जलस्वरूपम्**

वाचस्पत्यकोषे निर्गतं रादग्नेनीरम् अथवा निर्गतो रोऽग्निर्यस्मात् तन्नीरमिति। साङ्ख्यानां मते जलं रसतन्मात्रादुत्पन्नो भूतविशेषः। नैयायिकास्तु परमाणुविशेषेभ्य एव जलस्योत्पत्तिं स्वीकुर्वन्ति। वेदान्तिनां मते पञ्चीकृतेभ्य एव पञ्चभूतेभ्यः स्थूलतया उत्पन्नं जलम्। अत्र जलभूतांशबाहुल्याज्जलव्यवहारो वैशिष्ट्यात्तद्वद् इति। जलस्य भौतिकविवेचनदृष्ट्या 'अग्नेराप' इत्युपनिषद्वचनं सर्वथा वैज्ञानिकं वर्तते। आधुनिकवैज्ञानिकैरपि जलस्योत्पत्तिस्तैजसतत्त्वादग्निभूताद् ऑक्सीजनेत्याख्यादेव प्रत्यक्षी कृता। यथा घनीभूततत्त्वेषु सुवर्णः, द्रवेषु घृतञ्चान्तर्हिततेजसी मन्यते तथैव वायुभूततत्त्वेषु ऑक्सीजनेति तत्त्वं तेजसम्। भूतले यत्किञ्चिदपि दहनं शरीरान्तर्वर्ति, शरीरेभ्यो बर्हिवा भवति तस्य सर्वस्य कारणभूतम् ऑक्सीजनाख्यं तेजसतत्त्वमेव वर्तते। यदा हाइड्रोजनाख्यं वायुभूततत्त्वं माध्यमं विधाय ऑक्सीजनतत्त्वं प्रज्वलति तदा अस्माज्जलस्योत्पत्तिः जायते। ऑक्सीजनाख्य तैजसत्त्वस्य सूर्यतेजसंऽशभूतत्वात् यत्कञ्चिज्जलस्य सूर्योद्भवतत्त्वं वर्णितम्। यथा–

**सूर्याद् हि जायते तोयं, तोयात् सस्यानि शाखिनः।**[11]

आचार्यचरकस्य मतानुसारम्–

**जलमेकविधं सर्वं पतत्यैन्द्रो नभस्तलात्।**
**तत् पतत् पतितं चैव देशकालावपेक्षते।।**[12]

---

8. भविष्योत्तरपुराणम्, उत्तर, 129.71-73
9. बृहत्संहिता, अ. 54.1-2
10. छान्दोग्योपनिषत्, 7.1.1.।
11. प्राच्यभारतीयम् ऋतुविज्ञानम्, प्र.1, पृ. 3-4
12. चरकसंहिता, अ. 27.196

जलस्य मूलस्वरूपमेकमेवास्ति। यदा नभस्तलात् प्रतति तदा एकस्वरूपे एव भवति। अनन्तरं चैव देशकालानुसारं जलं गुणैः दोषैः वा युक्तं भवति। अपराजितपृच्छाग्रन्थानुसारं नगरे प्रप्रथमं जलापूर्तिव्यवस्था करणीया इति निर्देशितम्। यथा–

**पुरस्य बाह्याभ्यन्तरे विविधाः स्युर्जलाशयाः।**

**वापी-कूप-तडागानि कुण्डानि विविधानि च॥**[13]

नगराद् बहिः तथा अन्ते नानाप्रकारेण जलाशयानां व्यवस्था करणीया इति विश्वकर्मा वदति। विश्वकर्मवास्तुशास्त्रग्रन्थे आचार्यविश्वकर्मा नागरनिर्माणप्रसङ्गे जलव्यवस्था महत्त्वपूर्णविषयः इति प्रदर्शितवान्। नगरे जलव्यवस्थायां वापी-कूपयोः महत्त्वपूर्णस्थानमस्ति। यत्र ग्रामनगरराजभवनादीनां निर्माणं भविष्यति तत्र तत्र वापीकूपादिकं कल्पनीयम्। वापीकूपनिर्माणे प्रशस्तभूमिलक्षणं श्रीविश्वकर्माचार्याणां मतानुसारम्–

**यत्र स्वादुजलस्त्रावः सततं स्थितिभाग्भवेत्।**

**परीक्ष्य तत्र कर्तव्यं वापीकूपादिकं मतम्॥**[14]

ग्रामे नगरे वा राजप्रासादे वा यत्र भूमौ मधुरजलस्रावः सततं दृश्यते, ग्रीष्मादिसमयेष्वप्यविच्छिन्न-जलधारा बहुशः प्राप्यते, तत्र सुधाखण्डपाषाणस्थितशकलादिदोषरहितं स्थलं बहुधोपायैः परीक्ष्य, तस्यां निर्णयं कृत्वा उत्तमभूमौ कूपो वापी वा प्रकल्पनीया। ग्रामगेहादिखनने क्वचिद्वर्तुलं, क्वचिच्चतुरश्रं क्षुद्रप्रमाणककूपः कल्पनीयः। राजप्रासादादिषु दीर्घा वापी कार्या। अपराजितपृच्छायामपि यथोक्तम्–

**दश कूपाश्चतुर्वाप्यश्चत्वारि कुण्डकानि च।**

**तडागाः षड्विधाश्चैवं कथयाम्यपराजित॥**[15]

अनेन प्रकारेण प्राचीनकालत एव अस्माकं देशे बहुप्रकाराणां कूप-वापी-कुण्ड-तडागानाञ्च निर्माणविधानमस्तीति।

---

13. अपराजितपृच्छा, सूत्र-74.1
14. विश्वकर्मवास्तुशास्त्रम्, अ. 33.॥
15. अपराजितपृच्छा, सूत्र-74.2

# नागरप्रासादभेदाः

**रिंकेशभदूलाः**

वास्तुशास्त्रं वेदादुद्भूतम्। अथर्ववेदस्य उपवेदे स्थापत्यवेदे वास्तुशास्त्रस्यानेके सिद्धान्ताः विवेचिताः सन्ति। वेदादारभ्य इयं परम्परा अधुनापि प्रचाल्यमानास्ति। भारतीय-वास्तुशास्त्रस्य इदं वैशिष्ट्यं यद् दिक्-काल-देशानुसारेण पृथ्वी-तेज-वायु-जल-आकाशेति पञ्चमहाभूतानां सन्तुलनेन भवननिर्माणस्य प्रक्रिया स्वरूपञ्च उल्लिखितमस्ति। 'प्रासादः' इति शब्दः 'प्र' उपसर्गात् सद् धातोः घञ् प्रत्यये कृते निष्पन्नो भवति यस्यार्थो भवति विशालभवनं, मन्दिरं, देवालयः, राजभवनं, सभाभवनं, मण्डपं वा। 'मयमतम्' इति ग्रन्थेऽपि उल्लिखितम्–

**सभा शाला प्रपा रङ्गमण्डपं मन्दिरं तथा।**

**प्रासाद इति विख्यातं..........................॥**

प्रासादं दृष्ट्वा तत्रत्यस्य तन्निवासकर्तुः वा धर्मं, संस्कृतिं, संस्कारान्, विचाराञ्चापि ज्ञातुं शक्यते। अस्माकं देशे विद्यमानाः नैके प्रासादाः मोहम्मदीयैः शासकैः निर्मिताः इति दुष्प्रचारितम्, तेषां सूक्ष्मावलोकनेन पी.एन.ओकादिभिः विविधैः शोधकर्तृभिः 'तेऽपि हिन्दूशासकैः निर्मिताः' इति उद्घोषितम्। तेषु प्रासादेषु सनातनधर्मस्य विविधानि चिह्नानि समुपलभ्यन्ते। विविधेषु शास्त्रेषु तेषां समुल्लेखोऽपि वर्तते। भारतवर्षे प्राचीनकालादेव नृपादीनां कृते देवेभ्यश्च प्रासादनिर्माणं क्रियते स्म। अनेकेषु पुराणादि-ग्रन्थेषु काव्येषु च प्रासादानां विवेचनं प्राप्यते। महाभारते इन्द्रप्रस्थे (वर्तमानदेहल्यां) पाण्डवैः स्वनिवासाय भव्यप्रासादनिर्माणस्य वर्णनमतीवमनोहरं वर्तते। प्रासादनिर्माणस्य परम्परा कुतः प्रारब्धा इति उत्कण्ठायां सत्यां 'समराङ्गणसूत्रधार'ग्रन्थे प्रासादनिर्माणस्योत्पत्तिविषये एकं निर्वचनं प्राप्यते–

**पुरा ब्रह्मा सृजत पञ्च विमानान्यसुरद्विषान्।**

**वियद्वर्त्मविचारीणि श्रीमन्ति च महान्ति च॥**[1]

विमानशब्दस्यानेके अर्थाः शब्दकोशेषु विवेचिताः। तेषु एकोऽर्थः प्रासादः अथवा भव्यभवनमपि मिलति। अत्र विमानशब्दस्यार्थः प्रासादः एव। उक्तमपि कालीदासीये मेघदूते–

**नेत्रा नीताः सतत गतिना यद्विमानाग्रभूमिः।**[2]

अपि च रघुवंशे–

---

1. समराङ्गणसूत्रधारः/अ.49/श्लो.2
2. मेघदूतम्/उत्तरमेघः/श्लो. 8

**ते तस्य कल्पयामासुरभिषेकाय शिल्पिभिः।**

**विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम्।।**[3]

अनेन विवरणेन ज्ञायते यद् विमानशब्दस्यापरनाम प्रासादोऽपि भवति। ब्रह्मणा निर्मितेषु पञ्चविमानेषु प्रथमं वैराजनामकविमानं (प्रासादः) ब्रह्मणा स्वस्य कृते, द्वितीयं कैलासविमानं शिवाय, तृतीयं पुष्पकविमानं कुबेराय, माणिकपाशीविमानञ्च वरुणाय प्रकल्पितम्। एवं प्रासादनिर्माणस्य प्रक्रिया ब्रह्मणा प्रारब्धा। भुवनदेवाचार्येण अपराजितपृच्छायां प्रासादस्य चतुर्दशभेदाः परिगणिताः–

**यत्र येषां कृता पूजा तत्र तन्नामकास्तु ते।**

**प्रासादानां समस्तानां कथयिष्याम्यनुक्रमम्।।**

**सुरैस्तु नागराः ख्याता द्राविडा दानवेन्द्रकैः।**

**लतिनाश्चैव गन्धर्वैर्यक्षैश्चापि विमानजाः।।**

**विद्याधरैर्मिश्रकाश्च वसुभिश्च वराटकाः।**

**सान्धाराश्चोरगैः ख्याताः नरेन्द्रभूमिजास्तथा।।**

**विमाननागरच्छन्दाः सूर्यलोकसमुद्भवाः।**

**नक्षत्राधिपलोकोक्ताश्छन्दा विमानपुष्पकाः।।**

**पार्वतीसम्भवाः सेना वलभ्याकारसंस्थिताः।**

**हरसिद्ध्यादिदेवीभिः कार्याः सिंहावलोकिताः।।**

**व्यन्तरस्थितदेवैस्तु फांसना कारिणोमताः।**

**इन्द्रलोकसमुद्भूता रथाश्च विविधा मताः।।**[4]

एषु भेदेषु अष्ट भेदाः उत्तमप्रासादाः प्रासादमण्डनकारेण स्वीकृताः। ते–

**नागरा द्राविडाश्चैव भूमिजा लतिनास्तथा।**

**सावन्धारा विमानादि-नागराः पुष्पकाङ्किताः।।**

**मिश्रकास्तिलकैः श‍ृङ्गैरष्टो जातिषु चोत्तमाः।**

**सर्वदेवेषु कर्तव्याः शिवस्यापि विशेषतः।।**[5]

एतेषु भेदेषु प्रथमस्य नागरभेदस्य मण्डनसूत्रधारेण विरचिते प्रासादमण्डननामके वास्तुशास्त्रीये नामक ग्रन्थे पञ्चविंशतिः प्रकाराः निरूपिताः। तेषामेव प्रकाराणामत्र विवेचनं प्रस्तूयते–

---

3. रघुवंशम्/17/9
4. अपराजितपृच्छा/सू.106/पृ.627
5. प्रासादमण्डनम्/1/7-8

**1. वैराज्यप्रासादः**

अयं प्रासादः वर्गाकारः चतुर्षु दिक्षु द्वारयुक्तञ्च भवति। प्रत्येकं द्वारस्य बहिः आयताकारसोपानं भवितव्यम्। उक्तम्–

**चतुर्भागं समारभ्य यावत्सूर्योत्तरं शतम्।**
**भागसङ्ख्येति विख्याता फालना कर्णबाह्यतः।[6]**

**2. नन्दनप्रासादः**

**चतुर्भक्ते भवेत् कोणो भागो भद्रं द्विभागिकम्।**
**भागार्धं निर्गमं भद्रे प्रकुर्यान् मुखभद्रकम्।।**
**शृङ्गमेकं भवेत् कोणे द्वे द्वे भद्रे च नन्दनः।[7]**

प्रासादतलं चतुर्भागेषु विभज्य तेषु एकैकभागस्य कोणः तथा द्विभागिकः भद्रः करणीयः। भद्रस्य निर्गममर्धभागं स्थापयेत्। भद्रे मुखभद्रकमपि प्रकुर्यात्। कोणस्योपरि एकमेकं शृङ्गं द्वे द्वे उरु शृङ्गे भद्रस्योपरि स्थापनीये। एवं विधः नन्दनः प्रासादः।

**3. सिंहप्रासादः**

**मुखभद्रे प्रतिभद्र-मुद्गमो रथिकोपरि।**
**कर्णशृङ्गे सिंहकर्णः सिंहनामा च उच्यते।**
**देवतासु प्रकर्त्तव्यः सिंहिस्तत्रैव शाश्वतः।।**
**तुष्यति गिरिजा तस्य सौभाग्यधनपुत्रदा।**
**रथिका सिंहकर्णश्च भद्रे शृङ्गं च सिंहकः।।[8]**

तलविभागः नन्दनप्रासादवत् करणीयः। मुखभद्रे प्रतिभद्रं रचयेत्। भद्रस्य गवाक्षोपरि उद्गमं कुर्यात्। कर्णशृङ्गेषु सिंहकर्णः स्थापनीयः। एवं विधः प्रासादः सिंहप्रासादः कथ्यते।

**4. श्रीनन्दनाख्यप्रासादः**

**कर्णे शृङ्गं तु पञ्चाण्डं स श्रीनन्दन उच्यते।[9]**

सिंहप्रासादस्य कर्णे (उपरि) पञ्चाण्डे केसरीशृङ्गस्थापनेन श्रीनन्दनः प्रासादः भवति।

---

6. प्रासादमण्डनम्/5/3
7. प्रासादमण्डनम्/5/12
8. प्रासादमण्डनम्/5/13-15
9. प्रासादमण्डनम्/5/16

**5. मन्दिरप्रासादश्च**

**शृङ्गा इत्यर्थ षड्भागैश्चतुरस्रं विभाजयेत्।।**
**कर्ण प्रतिरथं कुर्यात् भद्रार्धं भागभागिकम्।**
**समं निर्गममंशैश्च भद्रं भागार्द्धं निर्गमम्।।**
**द्वे द्वे कर्णे तथा भद्रे शृङ्गमेकं प्रतिरथे।**
**मन्दिरस्तृतीयं भद्रे मलयो भद्रजं त्यजेत्।।**[10]

चतुरस्रं प्रासादं षड्भिः विभज्य एषु कर्णः, प्रतिकर्णः, भद्रार्धञ्चैषु प्रत्येकम् एकैकं भागं स्थापयेत्। कर्णप्रतिकर्णयोः निर्गमं समं कुर्यात्। भद्रञ्च निर्गमर्धभागस्य कुर्यात्। कर्णस्योपरि भद्रस्योपरि च द्वौ द्वौ तथा प्रतिकर्णस्योपरि एकशृङ्गं कुर्यात्। एवं विधः प्रासादः मन्दिरं कथ्यते।

**6. मलयप्रसादः**

मन्दिरप्रासादस्योपरि तृतीयस्य उरुशृङ्गस्य स्थापनेन मलयप्रासादः कथ्यते।

**7./8./9.विमान-विशाल-त्रैलोक्यभूषणप्रासादाः**

**प्रत्यङ्ग तिलकं कुर्यात् प्रतिरथे विमानकः।**
**भद्रोरुशृङ्गवैशालः प्रतिरथे सुभूषणः।।**[11]

मलयप्रासादस्य भद्रस्योपरि एकमुरुशृङ्गमपास्य कर्णयोरुभयोः पार्श्वयोः। एकैकं प्रत्यङ्ग तथा च प्रतिरथस्योपरि एकैकं तिलकमारोहणेन विमानप्रासादः कथ्यते। विमानप्रासादस्य भद्रस्योपरि एकैकक्रमे उरुशृङ्गस्य आरोहणेन विशालप्रासादः, प्रतिरथस्योपरि एकैकक्रमे अधिकशृङ्गानां स्थापनेन त्रैलोक्यभूषणप्रासादो भवति।

**10. माहेन्द्रप्रासादः**

**चतुरस्रेऽष्टभिर्भक्ते कर्ण प्रतिरथं रथम्।**
**भद्रार्ध भागभागञ्च भागार्धेन विनिर्गमम्।।**
**वारिमार्गान्तरयुक्ता रथाश्च तुल्यनिर्गमाः।**
**शृङ्गयुग्मं च तिलकं कर्णे हेतु प्रतिरथे।।**
**एकं चोरपथे भद्रे त्रीणि त्रीणि चतुर्दिशि।**
**शिखरं पञ्चविस्तारं महेन्द्रो राज्यदो नृणाम्।।**[12]

---

10. प्रासादमण्डनम्/5/16-18
11. प्रासादमण्डनम्/5/19
12. प्रासादमण्डनम्/5/20-22

चतुरस्रतलम् अष्टभागेषु विभज्य एषु कर्ण, प्रतिरथं, उपरथं, भद्रार्धञ्च एते प्रत्येकम् एकैकं भागे स्थापयेत्। भद्रस्य निर्गममर्धभागयुतं कुर्यात्। इमानि सर्वाणि अङ्गानि वारिभागान्तरयुक्तानि स्युः। कर्णस्य प्रतिरथस्य उपरथस्य च निर्गमम् एकैक भागे स्थापनीयम्। कर्णस्योपरि द्वे शृङ्गे, एकं तिलकं, प्रतिरथे द्वे शृङ्गे, उपरथे एक शृङ्ग, तथा च भद्रस्योपरि त्रीणि उरुशृङ्गाणि स्थापनेन माहेन्द्रप्रसादः कथ्यते। नाम्ना एव प्रतीयते यदस्य प्रासादस्य निर्माणं नृपेभ्यः भवति।

**11. रत्नशीर्षप्रासादः**

**कर्णे शृङ्गत्रयं शेषं पूर्ववद् रत्नशीर्षकः।**[13]

माहेन्द्रप्रासादस्य कर्णस्योपरि यदि शृङ्गत्रयं स्यात् तदा स रत्नशीर्षकः प्रासादो भवति।

**12. सितशृङ्गप्रासादः**

**त्यक्त्वैकशृङ्गं भद्रस्य मत्तालम्बं च कारयेत्।।**

**मस्तके तस्य ध्वाद्यस्य शृङ्गयुग्मं प्रदापयेत्।।**

**सितशृङ्गस्तदा नाम ईश्वरस्य सदा प्रियः।।**[14]

रत्नशीर्षप्रासादभद्रस्य त्रिषु उरुशृङ्गेषु एकं न्यूनं कृत्वा तत्र मत्तालम्बाख्यगवाक्षं प्रदापयेत्। तस्य छाद्यस्य मस्तके (उपरि) शृङ्गयुग्मं प्रदापनेन सित-शृङ्गप्रासादो कथ्यते।

**13./14. भूधर-भुवनमण्डलप्रासादौ**

**तिलकं यद्युपरथे भूधरो नाम नामतः।**

**छाद्यशृङ्गे तु तिलकं नाम्ना भुवनमण्डलः।।**[15]

सितशृङ्गप्रासादस्य उपरथोपरि एकमेकं तिलकं प्रदापनेन भूधरप्रासादः तथा च अस्य छाद्य शृङ्गयोः उपरि एकमेकं तिलकं स्थापनेन भुवनमण्डनप्रासादो भवति।।

**15./16.त्रैलाक्यविजय-क्षितिवल्लभप्रासादौ**

**शृङ्गद्वयं चोपरथे तिलकं कारयेत् सुधीः।**

**त्रैलोक्यविजयो भद्रं शृङ्गण क्षितिवल्लभः।।**[16]

उपरथस्योपरि शृङ्गद्वयम् एकं तिलकञ्च स्थापनेन त्रैलोक्यविजयः, एवञ्च भद्रस्योपरि एकं शृङ्गमधिकं स्यात् तर्हि क्षितिवल्लभप्रासादः भवति।

---

13. प्रासादमण्डनम्/5/23
14. प्रासादमण्डनम्/5/23-24
15. प्रासादमण्डनम्/5/26
16. प्रासादमण्डनम्/5/26

### 17. महीधरप्रासादः

**दशभागकृते क्षेत्रे भद्रार्धं भागमानतः।**
**त्रयः प्रतिरथाः कर्णो भागभागाः समो भवेत्।**
**कर्णे प्रतिरथे भद्रे द्वे द्वे शृङ्गे प्रकारयेत्।**
**रथोपरथे तिलकं प्रत्यङ्गं च रथोपरि॥**
**मत्तालम्बयुतं भद्रं प्रासादोऽयं महीधरः।[17]**

वर्गाकारभूमिं दशभागेषु विभज्य तेषु एक भागः भद्रार्धं, कर्णप्रतिकर्णौ रथोपरथौ चानयोरेकैकभागः करणीयः। अनयोः निर्गममपि एकैकं भागं स्थापयेत्। भद्रस्य निर्गमम् अर्धभागस्य कुर्यात्। कर्णः, प्रतिरथं तथा च भद्रोपरि शृङ्गद्वयं एवञ्च रथोपरथोपरि एकैकं तिलकं प्रदापयेत्। रथस्योपरि प्रत्यहं कारयेत्। भद्र मत्तालम्बद्ध (गवाक्षयुक्तं) करणेन महीधरः प्रासादः जायते।

### 18. कैलासप्रासादः

**भद्रे शृङ्गं तृतीयं च कैलासः शङ्करप्रियः।[18]**

महीधरप्रासादस्य भद्रस्योपरि तृतीयमेकशृङ्गमधिकं करणेन कैलासप्रासादः भवति।

### 19./20.नवमङ्गल-गन्धमादनप्रासादौ

**भद्रे त्यक्त्वा रथे शृङ्गं नवमङ्गल उच्यते।**
**तथा भद्रे पुनर्दद्यात् तदासौ गन्धमादनः॥[19]**

कैलासप्रासादस्य भद्रस्योपरि एकमुरुशृङ्गं न्यूनं कृत्वा रथे एकैकस्य शृङ्गस्य करणेन नवमङ्गलप्रासादः भवति। तथा च अस्यैवोपरि भद्रस्योपरि एकमुरुशृङ्गम् अधिकं कारयेत् तदा गन्धमादनप्रासादः भवति।

### 21./22.सर्वाङ्गसुन्दर-विजयानन्दप्रासादौ

**भद्रे त्यक्त्वा चोपरथे शृङ्गं सर्वाङ्गसुन्दरः॥**
**भद्रे दद्यात् पुनः शृङ्गं विजयानन्द उच्यते॥[20]**

गन्धमादनप्रासादस्य भद्राद् एकोरु शृङ्गं न्यूनं कृत्वा उपरथस्योपरि एकमेकं शृङ्गमारोहणेन सर्वाङ्गसुन्दरः तथा च अस्य भद्रस्योपरि एकमेकमुरुशृङ्गं पुनः आरोहणेन विजयानन्दप्रासादः कथ्यते।

---

17. प्रासादमण्डनम्/5/27-28
18. प्रासादमण्डनम्म्/5/29
19. प्रासादमण्डनम्/5/30
20. प्रासादमण्डनम्/5/31

**23. सर्वाङ्गतिलकप्रासादः**

**मत्तालम्बयुतं भद्र-मुरुश्रृङ्गं परित्यजेत्।**

**श्रृङ्गद्वयं च छाद्योर्ध्वे सर्वाङ्गतिलकस्तथा।।[21]**

विजययानन्दप्रासादस्य भद्रात् एकमेकमुरुश्रृङ्गं न्यूनं कृत्वा मत्तालम्बस्य (गवाक्षस्य) निर्माणेन तथा च अस्य गवाक्षछाद्यस्य उपरि श्रृङ्गद्वयस्य स्थापनेन सर्वाङ्गतिलकप्रासादः भवति।

**24. महाभोगप्रासादः**

**उरुश्रृङ्गं ततो दद्यान्मत्तालम्बसमन्वितम्।**

**महाभोगस्तदा नाम सर्वकामफलप्रदः।।[22]**

सर्वाङ्गतिलकप्रासादस्य गवाक्षयुतस्य भद्रस्य उपरि एकमेकमुरु श्रृङ्गस्य अधिकमारोहणेन महाभोगप्रासादो भवति।

**25. मेरुप्रासादः**

**कर्णे रथे प्रतिरथे श्रृङ्गमुपरथे तथा।**

**मेरुरेव समाख्यातः सर्वदेवेषु पूजितः।।[23]**

कर्ण-रथ-प्रतिरथ-उपरथेषु एकमेकं श्रृङ्गम् अधिककरणेन मेरुप्रासादो भवति। एते नागरप्रासादस्य प्रकाराः सन्ति। अष्टप्रमुखभेदेषु नागरः प्रथमः महत्त्वपूर्णश्च।

---

21. प्रासादमण्डनम्/5/32
22. प्रासादमण्डनम्/5/33
23. प्रासादमण्डनम्/5.34

# मयस्यावदानम्-सूर्यसिद्धान्तः

**अव्यक्तरैणा**

भारतवर्षे सिद्धान्तज्योतिषस्य परम्परा वैदिककालादेव प्रचलिता अस्ति। एवमपि मन्यते यत् सम्पूर्णविश्वे सर्वप्रथमं सिद्धान्तज्योतिषाचार्याः भारतवर्षे आसन्। वैदिकसंहितासु अनेन सम्बन्धिता अनेका ऋचाः सन्ति यत्र विभिन्नकालमानानाम्, ऋतुज्ञान-वर्ष-मासादिविषयाणाम् उल्लेखः मिलति। ऋग्वेदे एका ऋचास्ति यस्मिन् ऋतुपरिवर्तनस्य कारकः सूर्यः कथितः-

**पूर्वाम नु प्रदिशं पार्थिवानामृत प्रशासद्विदधावनूष्ठ।**[1]

अर्थात् सूर्यः ऋतूनां नियमनं कृत्वा क्रमशः पृथिव्याः पूर्वादिदिशानां निर्माणं करोति। एवमेव प्रकारेण अहोरात्रव्यवस्था, कल्पयुगादिमानानां प्रमाणमपि वेदेषु प्राप्यते।

वेदाङ्गज्योतिषे विस्ताररूपेण ज्योतिषस्य सूक्ष्ममूलविषयाणां वर्णनमस्ति। वेदाचारितज्योतिषशास्त्रस्य मूलग्रन्थानाम् उद्गमकालः शकपूर्व 500 आसन्न अस्ति। तेषां ग्रन्थानां मुख्यविषयाः सन्ति- कालमानं युगादिमानं ग्रहाणां गतिः ग्रहणविचार आदि। सिद्धान्तग्रन्थेषु सर्वप्राचीनग्रन्थाः मुख्यरूपेण पञ्च सन्ति येषां वर्णनं वराहमिहिरस्य पञ्चसिद्धान्तिकायां मिलति-

**पौलिशरोमकवासिष्ठसौरपैतामहास्तु पञ्चसिद्धान्ताः।**

वराहमिहिरेण सूर्यसिद्धान्तः पञ्चसिद्धान्तेषु सर्वोपरि स्वीकृतः। समयान्तरेण अन्यैः आचार्यैः सिद्धान्तग्रन्थानां निर्माणं कृतम्। अन्यमुख्यग्रन्थाः सन्ति-सोमसिद्धान्त-ब्रह्मस्फुटसिद्धान्त-नारदसिद्धान्त-पाराशरसिद्धान्त-सिद्धान्तशिरोमणि-सिद्धान्ततत्वविवेकादयः इत्यादि। सिद्धान्तज्योतिषे सर्वश्रेष्ठग्रन्थः सूर्यसिद्धान्त मन्यते विद्वद्जनैः।

सूर्यसिद्धान्तस्य सर्वप्राचीनभाष्यम् अस्ति श्रीरङ्गनाथेन विरचितं, यत्तु रङ्गनाथगूढार्थप्रकाशिका इति नाम्ना प्रसिद्धमस्ति। अस्य समयः 1495 ई. अस्ति। अन्यभाष्येषु नरसिंहदैवज्ञस्य सौरभाष्यं सुप्रसिद्धम्। नवीनाचार्येषु पं. सुधाकरद्विवेदीमहोदयानां सुधावर्षिणीनामभाष्यं प्रसिद्धमस्ति। यस्मिन् सर्वेषां प्राचीनार्वाचीनतथ्यानां प्रायः समावेशः। अस्यानन्तरं कपिलेश्वरशास्त्रिणा श्रीतत्त्वामृतभाष्यं 1943 इस्वीयाब्दे लिखितम्।

---

1. ऋ. सं. 1/15/03

ग्रन्थेऽस्मिन् चतुर्दशाधिकाराः सन्ति-मध्य-स्पष्ट-त्रिप्रश्न-चन्द्रग्रहण-सूर्यग्रहण-छेदक-ग्रहयुति-भग्रहयुति-उदयास्त-चन्द्रशृङ्गोन्नति- पात-भूगोल-ज्यौतिषोपनिषद्-मानाध्यायाः। एतेषु ग्रहनक्षत्रादीनां गतिस्थित्यादिविषये सुविस्तृतं चिन्तनं वर्तते।

**कालमानानि**

सूर्यसिद्धान्ते कालभेदाः एवं विहिताः– प्रथमस्तु लोकानामन्तकृत् कालः यः सर्वभूतसंहारकः अनादिरनन्तश्च वर्तते। अन्यकालः गणनात्मककालः। गणनात्मककालोऽपि द्विधा स्थूलसूक्ष्मत्वात्। अमूर्तकालः त्रुट्यादिकालः अयमतिसूक्ष्मत्वात् अव्यावहारिकः। अस्य ज्ञानं यन्त्रादिना कृत्वा गणिते प्रयुज्यते।[2] प्राणादयो कालाः मूर्तसंज्ञकाः व्यवहारिकाश्च भवन्ति।

**प्राणादिः कथितो मूर्तस्त्रुट्याद्योऽमूर्तसंज्ञकः।**
**षड्भिर्प्राणैर्विनाडीस्यात्तत्षट्या नाडिका स्मृता।।**
**नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्तितम्।**
**तत् त्रिंशता भवन्मासः सावनोऽर्कोदयैस्तथा।।[3]**

सुखासीनस्वस्थपुरुषस्यैकश्वासोच्छ्वासान्तवर्तिदशदीर्घाक्षरोच्चारणकालः प्राणसंज्ञकः स्यात्–

| | | |
|---|---|---|
| 1 प्राणः | = | दशदीर्घोच्चारणकालः |
| 6 प्राणाः | = | 1 पलम् (विनाडी) |
| 60 पलानि | = | 1 घटी (24 मिनट) |
| 60 घटी | = | 1 अहोरात्रम् |
| 30 अहोरात्राणि | = | 1 मासः |
| 12 मासाः | = | 1 वर्षम् |

नवविधकालमानानि–

**ब्राह्मं दिव्यं तथा पैत्र्यं प्राजापत्यं च गौरवम्।**
**सौरञ्च सावनं चान्द्रमार्क्षमानानि वै नव।।[4]**

अर्थात् ब्रह्ममानं, दिव्यं, दैवमानं, पैत्र्यं (पितृमानमिति) गौरवं, सौरं, सावनं, चान्द्रमं, नाक्षत्रमानञ्चेति नवविधकालमानानि सन्ति।

**1. ब्राह्ममानम्**–सहस्रमहायुगैः कल्पः सिद्ध्यति। सैव कल्पः ब्रह्मणो दिनमेकम्। ब्रह्मरात्रिमानमपि कल्पसमं भवति। ब्रह्मणोऽहोरात्रं कल्पद्वयात्मकमिति। एकस्मिन् कल्पे 4320000000 सौरवर्षाणि

---

2. सू. सि., मध्यमाधिकार 10
3. सू. सि., मध्यमाधिकार 11, 12
4. सू. सि., मानाधिकार 09

भवन्ति अतो 8640000000 सौरवर्षात्मकं तस्याहोरात्रमिति।[5]

**2. प्राजापत्यमानम्**–71 महायुगैः मनुर्भवति। एतत्तुल्यमेव प्राजापत्यमानं स्यादिति। अस्मिन् माने दिनरात्र्योः विभागो नास्ति।

**3. दिव्यमानम्**–देवसम्बन्धिमानं दिव्यमानम्। देवासुराणामहोरात्रं एकसौरवर्षतुल्यं भवति। नाडीवृत्तन्तु ध्रुवस्थानयोः क्षितिजवृत्तम्। सुराः उत्तरध्रुवे वसन्ति दक्षिणध्रुवे असुराः। यद् देवानां दिनं सा दैत्यानां रात्रिः यद्देवानां रात्रिः तद् दैत्यानां दिनम्। अतः त्रिंशत्सौरवर्षात्मकः दिव्यमासः तथा च 360 सौरवर्षात्मकं दिव्यवर्षमिति।

**4. गौरवमानम्**–अस्यापरनाम बार्हस्पत्यमानं गुरुमानमपि विद्यते। मध्यमगत्या बृहस्पतेः राशिभोगकालः गौरववर्षसंज्ञको भवति। सैव संवत्सरो भवति। संवत्सराः 60 सन्ति।

**5. पितृमानम्**–पितृणामहोरात्रं चान्द्रमासात्मकं भवति। 30 चान्द्रमासाः पितृणां एकः मासः।

**6. सौरमानम्**–सौरगतिसम्बन्धिमानं सौरमानम्। तत्तु सूर्यस्य मध्यमगगत्या[6] एक अंशभोगकालः सौरदिनं भवति। यदा सूर्यः 30 अंशमितं चलति तदा सौरमासः स्यात्। 30 अंशाः एकराशितुल्यं भवति अतः एकस्मिन् राशिभोगकाले सौरमासो भवति। द्वादशराशिभोगकालः सौरवर्षमिति।

**7. चान्द्रमानम्**– 'दर्शः सूर्येन्दुसंगमः' इति दर्शपरिभाषया सूर्यचन्द्रयोर्योगः दर्शान्ते अमान्ते वा भवति। चन्द्रः तीव्रगत्या सूर्यादग्रे गच्छति। यदा द्वयोर्मध्ये 12 अंशात्मकमन्तरं भवति तदैकं चान्द्रदिनं एका तिथिः वा भवति। दर्शान्तिद्वयमध्यगतकालः चान्द्रमासः। एकस्मिन् चान्द्रमासे त्रिंशत् तिथयः भवन्ति।

**8. सावनमानम्**–उदयादुदयं भानोः भूमिसावनवासरः इति परिभाषया सावनमानं भवति। सूर्यस्य एकस्मादुदयादपरमुदयं यावत् काल एव सावनदिनसंज्ञकः।

**9. नाक्षत्रमानम्**–कस्यापि नक्षत्रस्योदयादपरमुदयं यावान्कालः नाक्षत्रदिनमिति। एतस्य मानं षष्टिघटिकामितं भवति। आंग्लमतानुसारेण 23 घण्टा 56 मिनट 4.1 सैकेण्डमितं नाक्षत्रमानं यत्तु पृथिव्या अक्षभ्रमणेन समुत्पद्यते।

कालमानादनन्तरं ग्रन्थस्य मुख्यविषयोऽस्ति ग्रहस्पष्टीकरणम्। अस्माद्धेतोः अहर्गण-साधनं क्रियते। अहर्गणेन विना ज्योतिषशास्त्रस्य किमपि कार्यं न सिद्ध्यति। ग्रहानयनं विना शुभाशुभफलस्य ज्ञानं न जायते। ज्योतिषस्य मुख्यप्रयोजनं कालादिमानमपि एतेन विना न सिद्ध्यति। अतः अहर्गणसाधनं परमावश्यकं वर्तते। ग्रन्थेऽस्मिन् लंकार्धकालिकअहर्गणसाधनमस्ति।

**अहर्गणः**–अह्नानां दिवसानां समूह अहर्गण इत्युच्यते। अहर्गणः सावनदिनात्मको भवति। मनुजव्यवहारे दिनानि चंतुर्विधानि सौरचान्द्रनाक्षत्रसावनानि सन्ति। सौरचान्द्रनाक्षत्रदिनानां कदारम्भः

5. सू. सि., म. अ. 53
6. सू. सि., स्पष्टाधिकार श्लो. 39

कदा समाप्तिश्च इति अप्रत्यक्षम्। सावनदिवसस्य सूर्योदयकालयोः प्रारम्भविरामयोः प्रत्यक्षावलोकनात् सर्वं प्राचीनैरर्वाचीनैराचार्यैः सावनात्मक एव अहर्गणः स्वीकृतः। अस्य साधनम्–

सृष्ट्यारम्भतः अभीष्टकालं यावद् गतसौराब्दाः × 12 = सौरमासाः

सौरमासाः + चैत्रशुक्लादिगतमासाः = अभीष्टमासाः

एवं सौरसंक्रान्तिपर्यन्तं मासाः भवन्ति। अधिमासयोजनेन सौरमासाः चान्द्रात्मकाः भवन्ति।

अतोऽनुपातेनाधिमासाः साधनीयाः–

$$\frac{\text{युगाधिमासाः} \times \text{इष्टसौरमासाः}}{\text{युगसौरमासाः}} = \text{इष्टाधिमासाः} + \frac{\text{अधिशेषः}}{\text{यु. सौ. मा.}}$$

$$\text{इष्टसौरमासाः} + \text{इष्टाधिमासाः} + \frac{\text{अधिशेषः}}{\text{यु.सौ.मा.}} = \text{इष्टचान्द्रमासाः (संक्रान्तिकालिकाः)}$$

दर्शाग्रतः संक्रमणकालपूर्वं सदैव तिष्ठत्यधिमासशेषम्' इत्यादिना ते दर्शाग्रसंक्रान्तिकालयोर्मध्यवर्ति-अधिशेषा अधिकाः भवन्ति। अतोऽधिशेषे हीनाश्चान्द्रमासाः दर्शान्तकालिकाः भवन्ति।

अतः इष्टसौरमासाः + इष्टाधिमासाः = इष्टचान्द्रमासाः। (दर्शान्तकालिकाः)

इष्टचान्द्रमासाः × 30 = इष्टचान्द्रतिथयः

इष्टचान्द्रतिथयः + गततिथयः = गततिथिसंख्या

सावनदिवसे परिवर्तनार्थमवमदिनानि साध्यन्तेऽनुपातेन–

$$\frac{\text{युगावमदिवसाः} \times \text{इष्टचान्द्रदिनानि}}{\text{युगचान्द्रदिवसाः}} = \text{इष्टावमानि} + \frac{\text{अवशेष}}{\text{इ.च.दि.}}$$

गततिथयः – इष्टावमदिनानि = अभीष्टसावनाहर्गणः (सूर्योदयकालिकः)

**मध्यमग्रहानयनम्–**

सर्वे ग्रहाः स्व-स्वकक्षायां स्वकीयमध्यमगत्या भ्रमन्ति। अस्माकं ज्योषिशास्त्रस्य परम्परायां सर्वे ग्रहाः स्वकीयप्रतिमण्डले भ्रमन्तः भूपृष्ठस्थैर्जनैः कक्षावृत्ते यस्मिन् प्रदेशे दृश्याः भवन्ति तत्र स्फुटग्रहस्थानम्। कक्षावृत्तस्य केन्द्रं भूकेन्द्रं भवति। ग्रहभ्रमणवृत्तस्य केन्द्रं भूकेन्द्रापेक्षया अन्त्यफलज्यातुल्यदूरे भवति येन स्फुटग्रहो अनुपातसिद्धमध्यग्रहापेक्षया किञ्चित्फलतुल्यमन्तरितो भवति।

$$\text{ग्रहस्य दैनिकीगतिः} = \frac{\text{कल्पग्रहभगणाः} \times 1}{\text{कल्पकुदिनानि}}$$

इति ग्रहस्य मध्यमगतिः (दैनिकी)

---

7. सूर्य सि. स्पष्ट. अ. श्लो. 41
8. सू. सि. स्प. अ. श्लो. 40

सूर्यसिद्धान्ते ग्रहभगणाः दिनानां सख्यादयः पठिताः सन्ति, अतः अनुपातद्वारा एकदिवसस्य मध्यमग्रहः साध्यते।

यदि कल्पकुदिनैः कल्पग्रहभगणस्तदा अहर्गणेन किमिति–

$$\frac{\text{कल्पग्रहभगणाः} \times \text{अहर्गणाः}}{\text{कल्पकुदिनानि}} = \text{मध्यमग्रहभगणादयः}।$$

**ग्रहस्पष्टीकरणम्–**

सैद्धान्तिकदृष्ट्या अनुपातेन अहर्गणेन साधिताः सर्वेऽपि ग्रहाः लंकाक्षितिजे लंकायामर्धरात्रौ मध्यमार्ककालिकाः सिद्ध्यन्ति। अतस्तेषां मध्यमरात्रिकालिकस्फुटार्ककरणार्थं भुजान्तर-संस्कारः क्रियते।

ग्रहस्पष्टीकरणार्थं प्रथमावश्यकता मन्दफलस्य भवति। मध्यममन्दस्पष्टग्रहयोरन्तरं मन्दफलं भवति। ततः मन्दस्पष्टग्रहयोरन्तरं शीघ्रफलमिति। स्वकक्षायां भ्रमन् ग्रहः स्वशीघ्रोच्चकृताकर्षणेन यावदन्तरितो भवति, तदेव शीघ्रफलमिति। मन्दफलसंस्कृतग्रहो मन्दस्पष्टः। मन्दस्पष्टग्रहः शीघ्रप्रतिवृत्तानुरोधेन शीघ्रफलानयनं कृत्वा संस्कृते सति स्पष्टग्रहो भवति।

एवमेव ग्रहगतिस्पष्टीकरणं, दिग्देशकालज्ञानं, ग्रहणसाधनं, ग्रहाणाम् उदयास्तज्ञानं, चन्द्र शृङ्गोन्नतिसाधनं, पातसाधनमित्यादयः नैके विषयाः तत्र प्रतिपादिताः सन्ति। एवमेव भूगोल-खगोलयोः परिज्ञानं तत्र विशेषरूपेण प्रदर्शितमस्ति। वस्तुतः ग्रन्थोऽयं सिद्धान्तग्रन्थेषु शिरोमणिरिव शोभते।

# वास्तुशास्त्रदृष्ट्या द्वाराणां गुणदोषाः

अश्वनीकुमारः

वास्तुशास्त्रस्यानुसारं कस्यापि भवनस्य प्रासादस्य कार्यालयस्य वा मुख्यद्वारं बहुमहत्त्वं धत्ते। गृहस्य समृद्ध्यर्थं परमावश्यकमस्ति यत्सर्वप्रथमं तस्य मुख्यद्वारस्य दिशां दशाञ्च सम्यग्रूपेण निश्चितं भवेत्। यथा मानवशरीरे मुखस्य महत्ता भवति, तथैव महत्ता भवन-प्रासाद-गृह-कार्यालयाणां मुख्यद्वारस्यापि भवति।

तत्र मुख्यद्वारं सदैव अन्यद्वारानामापेक्षया सुविस्तृतं दीर्घं सुसज्जितं च भवेत्। वास्तुसिद्धान्तानामनुसारं सकारात्मकदिशि द्वारं गृहस्वामिने लक्ष्मीं, वैभवञ्च प्रददाति, एतद्विपरीतं नकारात्मकदिशि मुख्यद्वारं जीवने समस्यां जनयति। अतः भवनादीनां द्वाराणां निर्माणकाले वास्तुशास्त्रस्य नियमानां परिपालनं कर्त्तव्यम्। प्रसंगेऽस्मिन् स्वविश्वकर्मवास्तुशास्त्रे विश्वकर्मणा कथितं यत्-शुभमुहूर्त्त-समयदिवस-कालतिथ्यादिसर्वान् निरीक्ष्यैव स्वहस्ते कङ्कणादिं धारयित्वा पवित्रमनसा स्वस्य इष्टदेवस्य भक्तिपूर्वकमर्चनां कुर्यात्। समस्तमंगलघोषस्वस्तिवाचनयोर्मध्ये शिल्पी भवन-प्रासादादीनां वास्तुस्थलानां प्रदक्षिणां कुर्यात्तथा च तस्य कृतेऽत्यावश्यकस्य मुखद्वारस्य परिकल्पनां कुर्यात्।[1]

प्रासाद-भवन-हर्म्य-मठ-मण्डप-सदन-शाला-गृहादीनां दृढद्वारस्यायोजनां कुर्यात्। द्वारं कदापि अधोमुखम् ऊर्ध्वमुखं वा न स्थापयेत्। अस्य द्वारस्य स्थापना कस्याऽपि प्रकारस्यावरणरहिते समसूत्रयुक्ता पङ्क्तियुक्ता च भवेत्।

अस्य स्थानभेदा अपि निश्चितमानानुसारमेव नियोजितव्याः। अस्मिन् कार्ये ज्ञातव्यमस्ति यत् भूलम्बभित्तिबन्धौ तयोरधोभागाभ्यां सदृढौ भवेताम्। एतदर्थम् आधारनिर्माणं गर्भशिलोपरि कर्त्तव्यम्। उपर्यभिमुखमाधारनिर्माणं कदाचिन्न कर्त्तव्यम्। तथैवोपलभ्यते विश्वकर्मवास्तुशास्त्रे।[2]

---

1. शुभे मुहूर्त्ते सुदिने स्थपतिर्धृतकंकणः।
   शुचिः शुद्धमना भक्त्या पूजयित्वेष्टदेवताः।।
   सर्वमंगलघोषैश्च स्वस्तिशब्दैश्च शिल्पिभिः।
   वास्तुं प्रदक्षिणीकृत्य मुखद्वारं प्रकल्पयेत्।। विश्वकर्मवास्तुशास्त्रम्, 25.1-2
2. प्रासादे भवने हर्मये मठमण्डपसद्मसु।
   शालासु क्षुद्रगेहेषु भौमस्थानेष्वपि क्वचिता।।
   स्थलान्तरेषु स्थपतिर्युक्त्या तद्योजयेद्दृढम्।
   अधोमुखं चोर्ध्वमुखं स्थापयेन्न कदाचन।।

**वास्तुशास्त्रदृष्टया द्वारस्य गुणविवेचनम् -** गृहस्य निर्माणे द्वारस्य लक्षणविषये विश्वकर्मा वदति यत्- ईशपदे निर्मित्तं रौद्रद्वारं भयानकं भवति, तथा च पर्जन्यपदे निर्मित्तद्वारेण स्त्रीवियोगो भवति। जयपदे निर्मित्तद्वारं जयकारकं भवति। महेन्द्रपदे द्वारेण प्रभुतायामधिका वृद्धिर्भवति। आदित्यपदे निर्मित्तद्वारेण सर्वदा तैजसो (ऐश्वर्यस्य) वृद्धिर्भवति। धर्मपदे निर्मित्तद्वारेण शीलसुखयोर्वृद्धिरायाति। भृत्यपदे निर्मित्तद्वारं सुखदायि तथा च अन्तरिक्षपदस्थानेऽपि निर्मित्तद्वारं सुखप्रदायकं भवति।

अग्निपदस्थाने निर्मितद्वारेण सर्वदा अग्निभयं भवति। पूषायाः पदस्थाने भयं चिन्ता च सर्वदा भवत्येव। वितथस्थाने द्वारे सति शरीरे रुग्णता आयाति, परन्तु गृहक्षतस्य पदे निर्मित्तद्वारं बलं प्रददाति। यमस्य पदस्थाने निर्मितद्वारं मृत्युदायकं भवति। गन्धर्वस्य पदस्थाने निर्मित्तद्वारं धनं ददाति। भृङ्गराजस्य पदे निर्मित्तद्वारेण चक्षोर्ज्योतिः सदैव वर्धते। मृगपदस्थाने निर्मित्तद्वारं शौर्य विक्रमञ्च वर्धयति। पितृपदस्थाने निर्मित्तद्वारं आयुवर्धनं, दौवरिकपदस्थाने निर्मित्तद्वारं श्रीवृद्धिञ्च करोति। सुग्रीवपदस्थाने निर्मित्तद्वारं वानरैः उपद्रवं जनयति। पुष्पदन्तपदस्थाने निर्मित्तद्वारं धनं प्रददाति। वरुणस्य पदस्थाने निर्मित्तद्वारम् आरोग्यं प्रददाति तथा च शान्तिप्रदं भवति। असुरस्य पदस्थाने निर्मित्तद्वारं धननाशकं भवति। शोषस्य पदस्थाने निर्मित्तद्वारं हानि-लाभयोः स्थिरतां ददाति। पापयक्ष्मायाः पदस्थाने निर्मित्तद्वारेण स्वपक्षस्य हानिर्भवति। रोगस्य पदस्थाने निर्मित्तद्वारेण तत्काल एवोच्चाटनं भवति। नागस्य पदस्थाने निर्मित्तद्वारेण रोगभयं भवति। मुख्यपदस्थाने निर्मित्तद्वारेण मनोवाञ्छितकार्याणां सिद्धिर्भवति। भल्लाटस्य पदस्थाने निर्मित्तद्वारेण धनस्य वृद्धिर्भवति। सौमस्य पदस्थाने निर्मित्तद्वारेण सौख्यस्य कदाचित्क्षयं कदाचिच्च वृद्धिः भवति। पर्वतस्य पदस्थाने निर्मित्तद्वारेण सर्वदा उद्वेगो भवति। अदितेः पदस्थाने निर्मित्तद्वारेण हानि-लाभयोः समानता आयाति। दितिपदस्थाने निर्मित्तद्वारेण मनुष्योऽभिमानी भवति। एवम्प्रकारेण वास्तुभवनस्य परिधौ स्थिताः द्वात्रिंशद् देवताः द्वारस्य शुभाशुभफलं प्रयच्छन्ति। अत्र शुभपदं ग्रहणीयम्, नत्वशुभपदम्। एवमेव अपराजितपृच्छे अपि भणितमस्ति।[3]

---

स्थाप्यं तिरोधानहिनं समसूत्रं सपङ्क्तिकम्।
स्थानभेदं च तन्मानं निश्चित्यैव प्रकल्पयेत्।।
भूलम्बं भित्तिबन्धञ्च तदधः कल्पयेद्दृढम्।
अधश्शिला प्रकर्तव्या नोपरिष्टात्कदाचन।। विश्वकर्मवास्तुशास्त्रम्, 25.3-6

3. ईशे रौद्रं भवेद् द्वारं पर्जन्ये स्त्रीवियोगकृत्।
जये विजयदं ख्यातं माहेन्द्रे प्रभुतैधकृत्।।
तेजोवृद्धिः सदादित्ये धर्मे वै शीलतः सुखम्।
सुखदं भृत्यदेवे तु चान्तरिक्षे सदा सुखम्।।
अग्निस्थाने वह्निभयं पूष्णि चैव भयावहम्।
अनारोग्यं तु वितथे बलदं च गृहक्षते।।
मृत्युश्च यमसंस्थाने गन्धर्वे च धनञ्जयः।
भृङ्गराजे नैव सुखं शौर्य विक्रमदं मृगे।।
आयुः प्रदं पितृपदे श्रीदं दौवारिके तथा।
सुग्रीवे कपिबाहुल्यं पुष्पदन्ते तथार्थदम्।।

तत्र बृहत्संहितायां पूर्वदिशि ईशानकोणादारभ्य अष्टपदानां प्रत्येकं द्वारस्य फलम् अनेन प्रकारेण निगदितम्– शिखौ अग्निभयं, पर्जन्ये स्त्रीजन्म, जयन्ते प्रभूतधनता, इन्द्रपदे नृपस्य प्रियपात्रता, सूर्ये क्रोधवृद्धिः, सत्ये असत्यता, भृशे क्रूरता, अन्तरिक्षे च तस्करभयं भवति।

ततः दक्षिणदिशि अग्निकोणादारभ्य अनिले अल्पसुतः, पौष्णभागे दासता, वितथे नीचकर्मप्रवृत्तिः, बृहक्षते सुभोज्य-सुपानसुतादीनां प्राप्तिर्वृद्धिश्च भवति। यमभागे अशुभप्राप्तिः, गन्धर्वे कृतघ्नता, भृङ्गराजे निर्धनता, मृगभागे पुत्रस्य बलवीर्यस्य च नाशो भवति।

अनन्तरं पश्चिमदिशि नैर्ऋत्यकोणदारभ्य पितृपदे पुत्रव्यथा, दौवारिके शत्रुवृद्धिः, सुग्रीवे पुत्रधनप्राप्तिः, कुसुमदन्ते पुत्र-धन-सम्पत्तिप्राप्तिः, वरुणे धन-सम्पत्तिप्राप्तिः, असुरे नृपभयं, शोषे धनक्षय एवं पापयक्ष्मायां रोगभयञ्च भवति।

तत्पश्चात् उत्तरदिशि वायव्यकोणदारभ्य रोगे मृत्युबन्धनं भयञ्च, सर्पे शत्रुवृद्धिः, मुख्ये धन-पुत्र-लाभः, भल्लाटे समस्तशौर्यादिगुणसम्पत्तिप्राप्तिः, सोमे पुत्रवित्तप्राप्तिः, भुजङ्गे पुत्रविरोधः, अदितिभागे स्त्रीदोषस्योत्पतिः तथा च अष्टमे दितिभागे निर्धनता भवति। वास्तुपदस्य संख्या या काऽपि भवेत्, परञ्च देवानां स्थानं सुनिश्चितमेव।[4]

वास्तुमञ्जरीग्रन्थे कथितमस्ति यत् - आदित्यस्य स्थाने द्वारस्थापने सति अर्थस्य हानिर्भवति। यमस्य स्थाने द्वारकल्पनात् पुत्रस्य मृत्युः तथा च सोमस्य स्थाने द्वारस्थापनेन कुलस्य क्षयो भवति। आग्नेयकोणे द्वारस्थापनेन अग्निभयं भवति। पूषायाः स्थाने द्वारस्थापनेन द्वारं सम्पतिकारकं भवति। वितथस्थाने द्वारस्थापनेन सर्वदा आरोग्यं प्राप्यते, गृहक्षतस्थाने च द्वारस्थापनेन द्वारं बलप्रदायकं भवति।

यमस्थाने श्रीहानिः तथा च गन्धर्वस्थाने द्वारस्थापनेन मृत्युर्भवति। भृङ्गराजस्थाने धनप्राप्तिः पुत्रप्राप्तिश्च भवति। मृगस्थाने सूर्यस्थाने वा द्वारस्थापनेन विक्रमवृद्धिः। पितृस्थाने द्वारस्थापनेन आयुवृद्धिः,

आरोग्यशान्ती वरुणे चासुरेऽर्थक्षयप्रदम्।
हीनवृद्धिकरं शेषे पक्षघ्नं पापयक्ष्मके।।
सद्य उच्चाटनं रोगे नागे चोन्मादतो भयम्।
मुख्येऽभीष्टप्रदं चैव भल्लाटे चार्थवृद्धिकृत्।।
वृद्धिश्च क्षीणता सोमे सदोद्वेगस्तु पर्वते।
वृद्धिर्वृद्धिश्चादितौ च दितौ चैवाभिमानकृत्।। अपराजितपृच्छा, सूत्रम् - 101, श्लोकसङ्ख्या - 2-9

4. अनलभयं स्त्रीजननं प्रभूतधनता नरेन्द्रवाल्लभ्यम्।
क्रोधपरताऽनृतत्वं क्रौर्यं चैर्यं च पूर्वेण।।
अल्पसुतत्वं पैष्यं नीचत्वं भक्ष्यपानसुतवृद्धिः।
रौद्रं कृतघ्नमधनं सुतवीर्यघ्नं च याम्येन।।
सुतपीडा रिपुवृद्धिः सुतधनप्राप्तिः सुतार्थफलसम्पत्।
धनसम्पन्नृपभयं धनक्षयो रोग इत्यपरे।।
वधबन्धो रिपुवृद्धिः सुतधनलाभः समस्तगुणसम्पत्।
पुत्रधनाप्तिर्वैरं सुतेन दोषाः स्त्रीयो नैस्व्यम्।। बृहत्संहिता वास्तुविद्याध्यायः

दौवारिकस्य अंशे द्वारस्थापनेन सम्पत्तिवृद्धिश्च भवति। सुग्रीवस्थाने द्वारस्थापनेन कृषिकार्ये प्रचुरता एवञ्च पुष्पदन्तस्य स्थाने द्वारस्थापनेन सम्पदा प्राप्यते। वरुणस्थाने स्थापितं द्वारमारोग्यदायकं भवति।

असुरस्थाने द्वारस्थापनेन क्षयो भवति। शोषस्य स्थाने द्वारं क्षयप्रदं तथा च भल्लाटस्य स्थाने स्थापितद्वारमर्थवर्धकं भवति। सोमस्य स्थाने द्वारस्थापनेन कदाचित्क्षीणतां कदाचिच्च वृद्धिं करोति। पर्वतस्थाने नागस्थाने वा द्वारस्थापनेन बहूद्वेगो भवति। अतः यस्मिन् स्थाने अभिवृद्धिर्भवेत्, तन्मानानुसारं द्वारं परिकल्प्यते।[5]

**द्वारस्थापने ध्यातव्यविषयाः**

वास्तुशास्त्रम् अस्मान् सकारात्मकनकारात्मकोर्जयोः सामञ्जस्येन गृहनिर्माणार्थमुपदिशति। सकारात्मकोर्जायाः वृद्धौ सति गृहे प्रसन्नता आगच्छति, तथा तत्र नकारात्मकोर्जायाः वृद्धौ सति दुःखं रुग्णता चायाति। अनया नकारात्मकया ऊर्जया गृहे वास्तुदोषं समागच्छति।

वास्तुशास्त्रस्यानुसारं गृहस्य द्वारनिर्माणकाले दिग्वर्णयोर्ज्ञानमवश्यमेव करणीयम्। द्वारनिर्माणेऽनयोरतिमहत्त्वपूर्णं स्थानं विद्यते। अनेन ज्ञायते यत् कया दिशा गृहे सकारात्मकाया ऊर्जायाः तथा च कया दिशा गृहे नकारात्मकाया ऊर्जायाः प्रवेशो भवति। अतः सर्वप्रथममिदमावश्यकमस्ति, यद् गृहनिर्माणकाले मुख्यद्वारस्य दिशा दशा च सम्यग्रूपेण वास्तुशास्त्रानुसारेणैव भवेत्। मुख्यद्वारं सर्वदा सर्वथा च अन्यद्वाराणामपेक्षया बृहत्कलेवरयुक्तं सुसज्जितञ्च भवेत्।

वास्तुसिद्धान्तानुसारं सकारात्मकदिग्युक्तं द्वारं गृहस्वामीं लक्ष्मी-ऐश्वर्य-पारिवारिकसुख-वैभवादीन् प्रददाति। परञ्च नकारात्मकदिग्युक्तं द्वारं गृहस्वामीजीवने समस्याम् उत्पादयति। अतः भवनस्य मुख्यद्वारनिर्माणकाले ध्यातव्यं यत् -

द्वारस्य वेधत्यागः प्रयत्नपूर्वकं करणीयः। गृहस्य यावदुच्चता भवति तद् द्विगुणिते दूरे विद्यमाने स्थाने वेधवस्तुनि सत्यपि दोषो न भवति। यदि गृहस्योच्चतायाः समानदूरे मुख्यद्वारस्य

5. आदित्येत्वर्थहानिस्यात् मरणं यमदेवते।
पुत्रक्षयस्याद्वरुणे सोमे बन्धुकुलक्षयः।।
द्वारं वह्नौ वह्निभयं पूष्णिद्वारं श्रियावहम्।
वितथे तु सदारोग्यं गृहक्षते बलप्रदम्।।
यमस्थाने हि भवेन्मृत्युर्गन्धर्वे तु धनञ्जक्षयम्।
भृङ्गराजे धनं पुत्रः मृगे शौर्यं च विक्रमम्।।
पितृस्थाने भवेदायुः श्रियः दौवारिकांशके।
सुग्रीवे कृषिबाहुल्यं पुष्पदंतेऽर्थसम्पदः।।
आरोग्यं वारुणं द्वारमसुरे तु क्षयप्रदम्।
शेषे क्षयकरं द्वारं भल्लाटे चार्थवृद्धिदम्।।
क्षीणद्धिस्तथा सोमे महोद्वेगस्तु पर्वते।
वृद्धि स्याद्दिति स्थानेऽदितिस्थमभिमानतम्।। वास्तुमञ्जरी, 344-349

वेधोऽस्ति तदा गृहस्वामिनः कृते वेधो भवति, परञ्च गृहिणीकृते दोषकारको न भवतीति। विश्वकर्मप्रकाशेऽप्युक्तमेव।[6]

यदि कस्यापि भवनस्य द्वारं वृक्षेण वेधितम्, कर्णवेधेन युक्तम्, स्तम्भेन वेधितं, कूपेन वा वेधितं स्यात्तर्हि तद्द्वारं दोषयुक्तं भवति। भवनस्य मुख्यद्वारसम्मुखे यदि कोऽपि देवालयः, काऽपि वीथिका, वल्मीक-भस्म-शिराममर्मादिदोषाः तदा द्वारं विषनाडीसमानमेव ज्ञातव्यम्। अनेन द्वारेण युक्तं भवनमत्यशुभकारकं मन्यते। द्वारं सुष्ठुपदस्थाने भवेत्, तदा मुख्यद्वारं भवनस्य रक्षां करोति, तस्मात् तद्द्वारं अन्यद्वाराणामपेक्षया विपुलं सदृढं सौन्दर्ययुक्तञ्च भवेत्।[7]

गृहस्य मुख्यद्वारस्य पृष्ठभागे अन्यद्वारस्य निर्माणं न कर्त्तव्यम्, यतोहि मुखद्वारस्य रोधनं निश्चितरूपेणैव कुलनाशस्य कारकं भवति। यस्य द्वारस्य कपाटं स्वयमेवोद्घाटितं भवति, तद्द्वारमशुभफलदायकं भवति। यदि निर्धारितशास्त्रोक्तमानात् न्यूनमथवाऽधिकं द्वारं निर्मीयते तदाप्यशुभं भवति। तत्र यदि वास्तुशास्त्रमानान्न्यूनं द्वारं भवति, तर्हि गृहे सन्तापो भवति, वास्तुशास्त्रमानादधिकं भवेच्चेदपि राजभयं करोति। यदि द्वारमर्धखण्डितः तदा दलवेधः।[8]

वास्तुशास्त्रस्यानुसारं विभिन्नदिक्षु निर्माणकार्ये सति वास्तुदोषाः न सम्भवन्ति। द्वाराणि वेधदोषात् दौर्भाग्यं, निधनम्, रोगं, दरिद्रतां, कलहं, विरोधं, अर्थनाशं च कुर्वन्ति। विश्वकर्मप्रकाशस्यानुसारं गृहं परितः शुभवृक्षाः रोपणीयाः। गृहस्य कस्मिञ्चिद्दूरे पूर्वदिशि फलिनो वृक्षाः स्थापयेयुः। दक्षिणदिशि क्षीरयुक्तावृक्षाः शुभफलदायकाः भवन्ति। पश्चिमदिशि जलाशयो श्रेष्ठो भवति, यस्मिन् पङ्कजादयः विद्यमाना भवेयुः।

गृहं परितः परिखा-वलय-वृत्तादीनां निर्माणं कर्त्तव्यम्। दक्षिणदिशि तपोवनस्य स्थाननिर्माणं तथा उत्तरदिशि च मातृकागृहस्य निर्माणं कर्त्तव्यम्। पश्चिमदिशि श्रीलक्ष्मीनारायणस्य देवालयं, वायव्ये नवग्रहाणां पङ्क्तिञ्च स्थापयेत्। उत्तरदिशि यज्ञशालां तथा निर्माल्यस्य स्थानञ्च स्थापयेत्। पश्चिमदिशि सोमदेवस्य स्थानं बलिनिर्वपणाय स्थापयेत्। द्वारमुभयतः स्वस्ति-तुलसीवृक्षादीन् स्थापयेत्।

6. द्वारवेधं तु यत्नेन सर्वथा परिवर्जयेत्।
गृहोच्छ्रायाद् द्विगुणितं त्यक्त्वा भूमिं बहिस्थितः।।
न दोषाय भवेद् वेधो गृहस्य गृहिणीस्तथा।
गृहार्धं गृहिणी ज्ञेया गृहात्पूर्वोत्तरा शुभा।। विश्वकर्मप्रकाशः, 7.97-98

7. देवायतनविद्धं च विथिधि (धि?) विद्धं तथैव च।
वल्मीकभस्मविद्धं च सिराममर्मादिविद्धकम्।।
विषनाडीसमानं च फणयोः पद्मेव च।
स्थलभावावनं रक्षाद्वारं तद् (तु?) लसितं वरैः।। मयमतम्, 30.39-40

8. पिहिते मुखद्वारे तु कुलनाशे भवेद् ध्रुवम्।
पृष्ठद्वारे सर्वनाशः स्वयमुद्घाटिते तथा।।
मानोने व्यसनं कुर्यादधिके नृपतेर्भयम्।
अर्धखण्डं यदि द्वारं दलवेधं विनिर्दिशेत्।। विश्वकर्मप्रकाशः, 7.100-101

